# CHANDOVICITIḤ

OF

# *PATAÑJALI*




**Tattva Subodhinī Vṛtti of *Śrī Tātaprasāda***

**and**

**Chandoviciti vṛtti of *Śrī Pettā Śāstri***

Critically Edited By

**Prof. B.R. SHARMA, M.A., Ph.D.**

in association with

**Prof. L.N. BHATTA**

**RASHTRIYA SANSKRIT VIDYAPEETHA**
**TIRUPATI**

Rashtriya Sanskrit Vidyapeetha Series No. 66
राष्ट्रियसंस्कृतविद्यापीठग्रन्थमाला - 66

# CHANDOVICITIḤ
## OF
## *PATAÑJALI*

Tattva Subodhinī Vṛtti of Śrī Tātaprasāda
and
Chandoviciti vṛtti of Śrī Pettā Śāstrin, alias Hṛṣīkeśa Sharman

*पतञ्जलिकृता*

# छन्दोविचितिः

*श्रीतातप्रसादकृतया तत्त्वसुबोधिनीवृत्त्या*

*श्रीपेत्ताशास्त्र्यपराभिधानेन हृषीकेशशर्मणा विरचितया*

*छन्दोविचितिवृत्त्या च समलङ्कृता*

Critically Edited By

**Prof. B.R. SHARMA,** M.A., Ph.D.
Founder Director (Rtd.)
Kendriya Sansksrit Vidyapeetha, Tirupati

in association with

**Prof. L.N. BHATTA**
REGISTRAR



**RASHTRIYA SANSKRIT VIDYAPEETHA**
(Deemed University)
**TIRUPATI**
**2000**

Chandoviciti of Patanjali

Edited by
*Prof. B.R. Sharma*

First Edition : 2000

Copies : 500



Published by :

**Prof. D. Prahladacharya**
Vice-Chancellor
**Rashtriya Sanskrit Vidyapeetha**
(Deemed University)
Tirupati - 517 507
(A.P.)

Price : **279 = 00**

Printed at :
**Annapurna Graphics**
Tirupati

राष्ट्रियसंस्कृतविद्यापीठग्रन्थमाला - 66

*पतञ्जलिकृता*

# छन्दोविचितिः

*श्रीतातप्रसादकृतया तत्त्वसुबोधिनीवृत्त्या श्रीपेत्ताशास्त्र्यपराभिधानेन*
*हृषीकेषशर्मणा विरचितया छन्दोविचितिवृत्त्या च समलङ्कृता*

तिरुपतिस्थकेन्द्रीयसंस्कृतविद्यापीठस्य संस्थापक-निदेशकेन
**प्रो. बेल्लिकोत्तु रामचन्द्रशर्मणा**

विद्यापीठकुलसचिवस्य आचार्यस्य **प्रो. लक्ष्मीनरसिंहभट्टस्य** सहयोगेन
पाठभेदादिभिः संशोध्य सम्पादिता



**राष्ट्रियसंस्कृतविद्यापीठम्**
**तिरुपतिः (आं.प्र.)**

**2000**

पतञ्जलिकृता छन्दोविचितिः

सम्पादकः - *प्रो. बेल्लिकोत्तु रामचन्द्रशर्मा*

प्रथमसंस्करणम् - 2000

मुद्रितप्रतयः - 500



प्रकाशकः

प्रो. डि. प्रह्लादाचार्यः
कुलपतिः
राष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालयः)
तिरुपतिः - 517 507
(आं.प्र.)

मूल्यम् 279 = 00

मुद्रकः :

**Prof. D. PRAHLADA CHAR**
Vice Chancellor

**Rashtriya Sanskrit Vidyapeetha**
(Deemed University)
Tirupati - 517 507 (A.P.)

# PREFACE

We feel immensely happy to place before the Scholarly world, the *Chandoviciti*, a precious ancillary work of *Sāmaveda*. It is a part of *Nidānasūtra* attributed to Patanjali. This invaluable work highlights the different aspects of vedic metres. The work was commented upon by Sri Tataprasada and Sri Pedda Shastri under the title of *Tattva Subodhinīvṛtti* and *Chandovicitivṛtti* respectively. These two commentaries which profusely refer to various earlier authoritative sources are immensely helpful, in understanding the text *Chandoviciti*.

Dr. B.R. Sharma one of the eminent indologists of this country, has critically edited the text and commentaries with the help of rare manuscripts. He was the founder Director of the Kendriya Sanskrit Vidyapeetha, Tirupati, which was later upgraded as Deemed University by the Government of India. It is needless to say that mainly because of the selfless services of the scholars like Dr. B.R. Sharma and his successors the Vidyapeetha could attain the prestigious position that it occupies today.

Dr. Sharma completed the editing of this work some three years ago and gave it to the Vidyapeetha for publication. Due to some unavoidable circumstances there was some delay in bringing out this edition and we regret for the same. We are extremely thankful to Dr. Sharma for the excellent editing work for which he is well known. We also express our sincere thanks to Dr. L.N. Bhatta, Professor of Sahitya, Registrar-in-charge, R.S. Vidyapeetha for assisting Dr. Sharma in preparing the edition.

13-4-2000

— ***Prof. D. Prahlada Char***

## INTRODUCTION

The *Kendriya Sanskrit Vidyapeetha,* now a deemed university and renamed as *Rashtriya Sanskrit Vidyapeetha,* was established by the Govt. of India at Tirupati on the recommendation of Sanskrit Commission set up under the Chairmanship of Dr. Sunit Kumar Chatterjee. Initially the *Vidyapeetha* had two wings, namely Research and Pedagogy. In its Research wing, some of the members had their own Research Projects on which they worked in addition to official works, at the *Vidyapeetha* and also at home.

In my Research Project which was in Vedic field, I included *Chandoviciti* since the text is on Vedic metres. The metres on which the Vedic verses were composed are different from those of classical literature, although the ultimate aim is the same - *Sadyaḥpara-nirvṛtaye* as said in *Kāvya Prakāśa*.

The *Samaveda* unlike the other two *Vedas* has two parts, *Pūrva* and *Uttara*. Here too the *Pūrva* served as a source material to the *Uttara* and further, *Uttaragāna* was modified by inserting extra-verbal matter, known *stobha*, which would split vocable indiscriminately. *Chandoviciti* guides us in this matter.

The present text *Chandoviciti* is a part of the *Nidānasūtra* attributed to Patanjali. This work was edited by K.N. Bhatnagar of which the chapter pertaining to Samavedic metres was commented by Peddasastri, a well-versed scholar in *Sāmagāna* and also versatile in Shri Vaisnava school, with many works to his credit. The real name of the commentator was Hrisikesh Sharma but being an elderly person in the family, he was addressed as *Peda (Pedda)* Sastri. *Pedda* in Telugu means elder. This custom happens to be in all joint families.

It may be possible that, this learned family might have been under the patronage of Maharashtra rulers and later on migrated to Andhra. In Maharashtra the eldest son in joint families is addressed *Pedda* and probably following that custom Shri Hrishikesh Sharma was called *Pedda*.

The meaning of *Chandoviciti;* छन्दसां गायत्र्यादीनां विचयम् अन्वेषणम् । लक्षणमित्यर्थः । तद्विचयं व्याख्यास्यामः विविच्य विस्तरेण आसमन्तात् उपदेक्ष्याम इत्यर्थः । (See pg. 4, ln. 8 onwards)

The press copy of this ancillary of Samaveda was prepared on my retirement from Punjab University. Then, I selected Mysore for my permanent stay and work for two reasons : 1. The Oriental Institute of Mysore University is one of the best in India with rich and rare Mss. mostly on *Vedology.* 2. Further the Language Lab set up by the Government is well-equipped for reproduction of Mss. Therefore, the Mss. borrowed from the other country or individuals can be returned on time. In my long project, which is still being continued, *Chandoviciti* was one of such works which I wanted to refer often.

Many scholars in India and abroad are eagerly waiting for the *Samaveda* editions. I am happy that at long last this *Chandoviciti* is being published by Rashtriya Sanskrit Vidyapeetha and available to the scholars.

Before concluding I must express my gratitude to Dr. L.N. Bhatta who has prepared the indices of this book on my request. Dr. Bhatta who hails from a Vedic family was one of the active and faithful workers of Research wing of the Vidyapeetha, has donated well walled and well preserved precious Samavedic ancillaries (mss.) to *Vidyapeetha.* I take this oppurtunity to express my gratitude to him.

8-2-2000 — ***B.R. Sharma***

# CONTENTS

# ABBREVIATIONS

| | | | |
|---|---|---|---|
| आ.क. | आर्षेयकल्पः | पा.वा. | पाणिनीये वार्तिकम् |
| आ.गा. | आरण्यकगानम् | पा.शि. | पाणिनिशिक्षा |
| आ.ब्रा. | आर्षेयब्राह्मणम् | पा.सू. | पाणिनिसूत्रम् |
| ऊ.गा. | ऊहगानम् | पि.छ.सू. | पिङ्गलछन्दसूत्रम् |
| ऋ.वे. | ऋग्वेदः | पु.सू. | पुष्पसूत्रम् |
| ऋ.प्रा. | ऋग्वेद प्रातिशाख्यम् | पु.सं. | पुष्पसंहिता |
| ऐ.आ. | ऐतरेयारण्यकम् | प्र.सू. | प्रतिहारसूत्रम् |
| ऐ.ब्रा. | ऐतरेयब्राह्मणम् | बृ.आ. | बृहदारणक्यकम् |
| का.स.सू. | कात्यायनसर्वानुक्रमसूत्रम् | बृ.आ.उ. | बृहदारण्यकोपनिषद् |
| का.स्मृ. | कात्यायनस्मृतिः | मं.ब्रा. | मंत्रब्राह्मणम् |
| क्षु.क. | क्षुद्रकल्पः | म.भा. | महाभाष्यम् |
| क्षु.सू. | क्षुद्रसूत्रम् | मी.सू. | मीमांसासूत्रम् |
| ग्राम. | ग्रामगेयगानम् | या.स्मृ. | याज्ञवल्क्यस्मृतिः |
| छा.उ. | छान्दोग्यवोपनिषद् | लो.शि. | लोमशशिक्षा |
| जै.आ.ब्रा. | जैमिनीय आर्षेयब्राह्मणम् | ला.श्रौ.सू. | लाट्यायनश्रौतसूत्रम् |
| ता.ब्रा. | ताण्ड्यब्राह्मणम् | वा. | वार्तिकम् |
| तै.आ. | तैत्तिरीयारण्यकम् | वा.सं. | वाजसनेयीसंहिता |
| तै.सं. | तैत्तिरीयसंहिता | श.ब्रा. | शतपथब्राह्मणम् |
| दे.अ.ब्रा. | देवताध्यायब्राह्मणम् | शु.य.सर्वा.सू. | शुक्लयजुर्वेदसर्वानुक्रमसूत्रम् |
| द्रा.श्रौ.सू. | द्राह्यायणश्रौतसूत्रम् | ष.वि.ब्रा. | षड्विंशब्राह्मणम् |
| ना.शि. | नारदशिक्षा | सं.ब्रा. | संहितोपनिषद्ब्राह्मणम् |
| नि. | निरुक्तम् | सा. | सामवेदः |
| नि.सू. | निदानसूत्रम् | सा.वि.ब्रा. | सामविधानब्राह्मणम् |
| प.वि. | पदविभाग्यम् | स्तो.वि. | स्तोभविभाग्यम् |

---

# छन्दोविचितिः

# CHANDOVICITIḤ

ॐ

# छन्दोविचितिः

[पतञ्जलिकृत-निदानसूत्रान्तर्गता ]

श्रीतातप्रसादकृतया तत्त्वसुबोधिनीवृत्त्या

श्रीपेत्ताशास्त्र्यपराभिधानेन हृषीकेशशर्मणा विरचितया

छन्दोविचितिवृत्त्या च समन्विता।

—❀❀❀—

## प्रथमः पटलः

## प्रथमः खण्डः

**अथातश्छन्दसां विचयं व्याख्यास्यामः ॥ १ ॥**

### तत्त्वसुबोधिनीवृत्तिः

विघ्नेशं भारतीमीशमाचार्यं च पतञ्जलिम्।
नत्वा निदानसूत्रस्य वृत्तिं कुर्वे यथामति ॥१॥

क्व सूत्रमतिगम्भीरं कैतद्वृत्त्या नु साहसम्।
तातप्रसादः कुरुते वृत्तिं तत्त्वसुबोधिनीम् ॥२॥

**अथ**शब्दः आनन्तर्ये। **अतः**शब्दो हेतोर्वृत्तत्वे। तत्र प्रतिपत्तॄणाम् एतत्सूत्रप्रवृत्तिनियमेन यदनन्तरं तदनन्तरम्। सूत्रार्थश्च ऋक्साममन्त्रब्राह्मणार्थरूप इति तेषामध्ययनानन्तरं सूत्रार्थप्रतिपत्ति-

---

8. S (तातप्रसादतः कुर्वे) and then written in brackets (तातः प्रसादः कुरुते)

हेतोरध्ययनस्य वृत्तत्वात् तेष्वनुष्ठानायार्थविशेषं जिज्ञास्यमानानां **छन्दसां विचयं** विचीयते निर्णीयतेऽनेनेति व्युत्पत्त्या ज्ञानस्याधारीभूतं सूत्रं **व्याख्यास्यामः** विस्पष्टं करिष्याम इत्यर्थः ॥ १ ॥

## छन्दोविचितिवृत्तिः

श्रीमूलस्थानसर्वेशमखिलाण्डेश्वरीप्रियम् ।
सनातनमहं वन्दे सीतारामौ च सर्वदा ॥१॥

प्रधानसूत्रकारादीन् मुनीन् **द्राह्यायणा**दिकान् ।
**राणायन्या**दिकान् सामगाचार्यान् प्रणमाम्यहम् ॥२॥

येन कण्डरमाणिक्यग्रामरत्ननिवासिना ।
**रङ्गनाथाध्वरीन्द्रेण मकरन्दाभिधा** कृता ॥३॥

व्याख्या हि **पदमञ्जर्याः कौमुद्याः पूर्णिमा**भिधा ।
शिरसा तमहं वन्दे मम मातामहं गुरुम् ॥४॥

याः षट् **पिङ्गलनागाद्यै**श्छन्दोविचितयः कृताः ।
तासां **पिङ्गलनागीया** सर्वसाधारणी भवेत् ॥५॥

**सर्वानुक्रमणी** काचित् **छन्दोऽनुक्रमणी** परा ।
**शौनकीया** तृतीयेमास्तिस्र ऋग्वेदिनां मताः ॥६॥

यजुर्वेदविदामन्या **सर्वानुक्रमणी** भवेत् ।
सामगानां **निदानस्था पतञ्जलि**कृता हि सा ॥७॥

वैदिकाचारनिरतविद्वद्दीक्षितमण्डिते ।
**तञ्जावूर**भिधग्रामे रम्ये वासं प्रकुर्वता ॥८॥

सत्कौशिककुल**श्रीमत्प्रयागकुटिकेन च** ।
प्रधानसूत्रप्रमुखैः षड्भिः सूत्रैः सह स्फुटम् ॥९॥

7. A. °सूत्रादिकारान् for °सूत्रकारादीन्
17. A यास्केन हि कृता सा हि यजुर्वेदविदां मता । for यजुर्वेद . . . . . . भवेत्



अधीतिना सामवेदे साङ्गे तद्भाष्यवेदिना ।
प्रतिपादयता फुल्लं साम्नां पर्वणि पर्वणि ॥ १० ॥

श्रौतस्मार्तप्रवीणेन **नारायणसुतेन** हि ।
प्रकृतिसामकठिनपर्वज्ञापनकारिणा ॥ ११ ॥

**पेत्ताशास्त्र्य**भिधानेन **हृषीकेशेन** शर्मणा ।
वृत्तिर्निदानग**च्छन्दोविचित्याः** क्रियतेतराम् ॥ १२ ॥

प्रीयन्तामनया वृत्त्या सामवेदविशारदाः ।
यथेयं भासतां लोके तथाङ्गीक्रियतां च तैः ॥ १३ ॥

अथ भगवान् छन्दोविचितिकारः **पतञ्जलिः** श्रोतृबुद्धिसमाधानाय वक्ष्यमाणमर्थं संगृह्य प्रतिजानीते- **अथातः** इति । **अथ** वेदाध्ययनानन्तरम् । यतोऽनधीतवेदानां पुंसामृक्परिज्ञानाभावात् वक्ष्यमाणगायत्र्यादि-लक्षणानामिदन्तया लक्ष्यं प्रतिपत्तुमशक्यम् अतस्तदनन्तरमिति गम्यते । यद्वा अथात इति पदद्वयं वाक्योपक्रमे यथा लोकवेदयोर्दृश्यते । तद्यथा - **अथातोऽनन्ता द्वादशाहाः** (क्षु.सू.३.१६) । **अथातः संहिताया उपनिषत्** (ऐ.आ. ३.१.१) । **अथातः सामान्तानाम्** (नि.सू.१.१२.१) । **अथातो विद्धचव्यपदेशे** (द्रा.श्रौ.१.१.१.) । इति ॥

'चदि आह्लादे' इति धातोः असुन् प्रत्यये कृते चकारस्य छकारादेशे नुमागमे च कृते छन्द इति भवति । तथा चोणादिसूत्रम् - **चदेरादेशच छः** (४.२१८) इति । यद्वा 'ऋ गता' विति धातोः 'छद अपवारणे' इति धातोर्वा **उणादयो बहुलम्** (पा.३.३.१) इति बहुलग्रहणात् असुन्प्रत्यये

1. A वेदने for वेदिना
3. S. सूत्र for स्मार्त
4. S. °काम्रि for °कठिन
12. A लक्षणं for लक्ष्यं
13. तथा for यथा
19. S अत सातत्य for ऋ

छन्दादेशे च कृते सति छन्द इति भवति। तदुक्तं *देवताध्यायब्राह्मणे* - **चदेरर्तेस्तच्छन्दांसि । छादयतीति वा** (३.२०) इति। छन्दसामाह्लादकरत्वमनन्तश्रीप्रदत्वात्। तच्च **छन्दसां विचयं जानन्** (२.३.२०) इत्यादिना स्वयमेव वक्ष्यति। पादबद्धेषु सर्वेषु मन्त्रेषु गमनात् अर्तिधातुव्युत्पत्तिरुपपद्यते। अपवारकत्वं तु छन्दोज्ञानवतां पापेभ्यः छादनात्। तथा च *बह्वृचब्राह्मणम्*- **छादयन्ति ह वा एनं छन्दांसि पापात्कर्मणः** (ऐ.आ.२.१.६) इति॥

**छन्दसां** गायत्र्यादीनां **विचयम्** अन्वेषणम्। लक्षणमित्यर्थः। तद्विचयं **व्याख्यास्यामः** विविच्य विस्तरेण आसमन्ताद् उपदेक्ष्याम इत्यर्थः। यद्यप्येतच्छन्दोविचितिवक्ता ***पतञ्जलिरे***कस्तथापि व्याख्येयार्थबहुत्वात् तत्स्वात्मन्यारोप्यात्मनो बहुमानेन वा बहुवचनं प्रयुक्तवान्। तदुक्तम् ऋग्वेदसर्वानुक्रमणीव्याख्याकृता **षड्गुरु**शिष्येण-

**व्याख्येयार्थबहुत्वेन बहुमानेन चात्मनः।**
**व्याख्यात्रात्मन्यथारोप्य बहुत्वं तु प्रयुज्यते॥**

इति। यद्वा **अस्मदो द्वयोश्च** (पा.१.२.२९) इत्येकस्मिन्नपि बहुवचनप्रयोगः॥

अत्र देव-असुर-प्रजापति-ऋषि-यजुः-साम-ऋक्-ब्रह्म-छन्दोभेदेन गायत्र्यादीनि छन्दांस्यष्टविधानि भवन्ति। तथा हि-देवासुरप्रजापतिऋषिच्छन्दसाम् **अथ देवासुरच्छन्दांसि** (नि.२.२.३) इत्यादिना अयमेव सूत्रकारः स्वयमेव लक्षणानि वक्ष्यति।

1. A Om सति
2. S. चदेरदेः for चदेरर्तेः; S. Om तत्
3. S °कारत्वम् for °करत्वम्
4. S. Om स्वयमेव
8. S Om अन्वेषणम्। लक्षणमित्यर्थः। तद्
14. A प्रयुञ्जते for प्रयुज्यते
18. S. Om. गायत्र्यादीनि
20. S. Om. अयमेव सूत्रकारः स्वयमेव



यजुषां छन्दांसि तु - षडक्षरा गायत्री। सप्ताक्षरोष्णिक्। अष्टाक्षरानुष्टुप्। नवाक्षरा बृहती। दशाक्षरा पङ्क्तिः। एकादशाक्षरा त्रिष्टुप्। द्वादशाक्षरा जगती।

साम्नां छन्दांसि तु - द्वादशाक्षरा गायत्री। चतुर्दशाक्षरोष्णिक्। षोडशाक्षराऽनुष्टुप्। अष्टादशाक्षरा बृहती। विंशत्यक्षरा पङ्क्तिः। द्वाविंशत्यक्षरा त्रिष्टुभ्। चतुर्विंशत्यक्षरा जगती॥

ऋक्छन्दांसि तु - अष्टादशाक्षरा गायत्री। एकविंशत्यक्षरोष्णिक्। चतुर्विंशत्यक्षरानुष्टुप्। सप्तविंशत्यक्षरा बृहती। त्रिंशदक्षरा पङ्क्तिः। त्रयस्त्रिंशदक्षरा त्रिष्टुप्। षट्त्रिंशदक्षरा जगती॥

ब्रह्मच्छन्दांसि तु - षट्त्रिंशदक्षरा गायत्री। द्विचत्वारिंशदक्षरोष्णिक्। अष्टाचत्वारिंशदक्षरानुष्टुप्। चतुःपञ्चाशदक्षरा बृहती। षष्ट्यक्षरा पङ्क्तिः। षट्षष्ठ्यक्षरा त्रिष्टुप्। द्विसप्तत्यक्षरा जगती॥

तदुक्तं *शौनकेन* -

**तत्पादो यजुषां छन्दः साम्नां तु द्वावृचां त्रयः।**
**गायत्र्यादिजगत्यन्तमेकद्वित्र्यधिकं च तत्॥**
**आर्षवत्तत्समाहारो ब्राह्मो वर्गः षडुत्तरः।** (ऋ.प्रा.१६.१०,११)

अत्र **छन्दसां विचयम्** इति सामान्येनोक्तावपि ऋगादिच्छन्दसां सामशाखायां व्यवहारदर्शनात् **चतुर्विंशत्यक्षरा गायत्री** (१.२.१) इत्यादिवक्ष्यमाणपर्यालोचनया च ऋषिदेवासुरप्रजापतिच्छन्दसामेव विचयमिति ज्ञेयम्॥

ननु **अथातश्छन्दसां विचयं व्याख्यास्यामः** इत्यनेन गायत्र्यादिछन्दःप्रतिपादनायेदं सूत्रमित्युक्तं भवति। गायत्र्यादिछन्दसां ज्ञानेन किं प्रयोजनम्। ज्ञानाभावे वा को दोषः। उच्यते।

9. A. त्रि° for द्वि°
21. A. Om भवति
22. A. Om वा

ब्राह्मणकल्पप्रधाननिदानप्रतिहारफुल्लोपग्रन्थसामतन्त्रेषु छन्दःपुरःसरं तत्तत्कार्यविधिदर्शनात् छन्दोज्ञापनार्थमिदम् । छन्दसां ज्ञाने फलं च ज्ञानाभावे प्रत्यवायश्च दृश्यते। तथा हि - द्वे गायत्र्यां सामनी । एकं छन्दः । ककुबुष्णिहौ द्वे सामनी (ष.ब्रा.१.३.१२) गायत्रीषु ब्रह्मवर्चसकामायोक्थानि प्रणयेयुर्गायत्र्यां ब्रह्मसामानुष्टुभि अच्छावाकसाम (ष.ब्रा.८.१०.१) द्वे बृहत्याम् । (ष.ब्रा.१.३.४) तस्मात् विराट्सु वामदेव्यमग्निष्टोमसाम भवति। (तां.ब्रा.१५.१२.१) एकं त्रिष्टुभि साम (ष.ब्रा. १.३.५) एकं जगत्यां साम (ष.ब्रा. १.३.१२) । शक्करीषु षोडशिना स्तुवीत (तां. ब्रा. १२.१३.१३) । यदतिच्छन्दा अत्येत्येतदन्यान्यहानि (तां.ब्रा.५.२.११) येन छन्दसा स्तोष्यन् स्यात् तच्छन्द उपधावेत् (छां.उ.१.३.१०) इत्यादि ब्राह्मणे। पवस्व वाजसातय इति तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति, (आ.क.६.११.१) आजिगक्रौञ्चे उद्धरति । स्वे उष्णिक्ककुभौ (आ.क.७.६.१) । तं खलु बृहतीषु कालेयमनुकल्पयामः । उद्धरति जराबोधीयम् । सतोबृहतीद्विपदातिच्छन्दसश्च (आ.क.६.२४.२) । पुनानः सोम धारयेति रौरवं तिसृषु । सदोविशीयमेकस्याम् । समन्तं विष्टारपङ्क्तौ (आ.क.५.१३.१.) इत्यादि कल्पसूत्रे । गायत्रीकारं प्रगाथकारं वा (ला.श्रौ. २.४.१४-१५) । उष्णिक्ककुभोस्तृचैकर्चत्वमव्याघातेन (ला.श्रौ.६.३.२७) । द्वादशाक्षराण्यभिष्टोभेदनुष्टुभि । (ला.श्रौ.७.११.८) पिपीलिकामध्या अनुष्टुप् प्रभृतिव्रतात् (ला.श्रौ.४.७.३) । उभौ बृहत्यां शाण्डिल्यः (ला.श्रौ. ६.१.१९) अष्टाक्षरपदोत्तमानां चत्वार्यन्यत्र पङ्क्तिभ्यः (ला.श्रौ.६.१०.२७)। छन्दोदैवतसामान्तयोगान्न्याय्यान् (ला.श्रौ.६.८.१०) इत्यादि प्रधानसूत्रे ।

1. A. सूत्रनिदानसूत्रप्रतिहारसूत्रफुल्लसूत्र उपग्रन्थे सूत्रे सामतन्त्रे एषः for प्रधान . . . . . सामतन्त्रेषु; S. उपग्रन्थेषु उपग्रन्थसामतन्त्रेषु;

17. A. °कारप्र° for °कारं प्र°

20. A °वृत्तौ for °व्रतात्

23. न्यायान् for न्याय्यान्



त्रिष्टुभं वैश्वदेवकर्मणि करोति । न हि गायत्री विद्यते (नि.सू.७.३) । प्रतिपदाज्यानि ब्रह्मसामौष्णिहम् (नि.सू.६.३) । बृहतीषु नान्यद्बृहद्रथन्तराभ्यामर्हति यत् ककुबुत्तरासु स्यात् (नि.सू.७.४) । यत्रान्यदग्निष्टोमसाम भवति तत्र यज्ञायज्ञीयमनुष्टुभि भवति (नि.सू.६.३) इत्यादि निदानसूत्रे । चतुरक्षरो गायत्रीषु (प्र.सू.३.५७) । उष्णिहां तु विभाग्ये (प्र.सू.१.२०) ककुप्सु नानापद्यः (प्र.सू.३.५४) । अनुष्टुभि चाभिषेचनीयगोसवयोः (प्र.सू.८.१) विराट्संपन्ने षोडश बृहतीषु। (३.२५) षोडशिसाम (प्र.सू.१०.२९) । आपद्येते तु जागते भासवाजजिती (प्र.२.२.)। प्राजापत्यमतिच्छन्दसम् (प्र.सू.७.३३) । विच्छन्दसामनुच्छन्दः सं विनियोगः (प्र.सू.२.१) । छन्दसा जाम्यसंचारस्थानैश्च समीक्षेत । (प्र.सू.२.४) । इत्यादि प्रतिहारसूत्रे । गीथोपान्त्यं त्रिषु बोधीये (पु.सू. ५.३.४५) । त्रीक्रौञ्चप्रमशकृत्यं (पु.सू. १०) । उष्णिक्षु च कुलीये (पु.सू. ८.७.३) । पुनाभिसोजम्भे चोत्तरयोः ककुभोर्विकल्पः (पु.सू.९.१.२२) । अनुष्टुप्सु ऋभुसंघातम् (८.६.९)। विराट्पर्यूषु च देव्ये गीथस्तदादिः (पु.सू.९.१.१२) ॥ त्रिष्टुभि चोतायां शने च द्वितीयचतुर्थस्थम् (पु.सू.५.१.१५) । जगतीषु च वाराहे (पु.सू.५.४.१३) । समुद्रच्छन्दसि चोतायां द्वितीयस्थम् (पु.सू.९.६.१२) इत्यादि फुल्लसूत्रे । नान्यत्र वैराजात् स्वराजो भविष्यन् (उ.ग्र.३.७.) इत्युपग्रन्थसूत्रे । वि ष्टुभि (सा.तं. ४६९) । दोरादेर्विंत्र्याम् (सा.त. ११२४) इति सामतन्त्रे । एवं ब्राह्मणकल्पप्रधाननिदानप्रतिहारफुल्लोपग्रन्थसामतन्त्रेषु छन्दःपुरःसरं तत्तत्कार्यविधिदर्शनात् छन्दोज्ञापनार्थमिदम् । अन्यथा कर्मणां

1. S Om °देव°

1. A Om न हि; A विध्यते for विद्यते

4. A यत् for यत्र; A तद् for तत्र

15. A °संहतम् for °संघातम्

20. A Om विष्टुभि . . . सामतन्त्रे

21. S ग्रन्थेषु for ग्रन्थसामतन्त्रेषु

निर्णयाभावात्। अयथाकरणमनुष्ठानं वा स्यात्। किं च। ऋग्यजुःसामतन्त्रैस्तत्तच्छन्दोज्ञानाभाववता पुरुषेणानुष्ठितश्रौतस्मार्तकर्मभ्यः फलोदयाभावः। तदुक्तमृग्वेद-सर्वानुक्रमणीकृता *वररुचिना* - **न ह्येतज्ज्ञानमृते श्रौतस्मार्तकर्मप्रसिद्धिः** (१.१.१) इति। आर्षेयब्राह्मणभाष्यकारेण *विद्यारण्ये*नाप्युक्तम् -

**अविदित्वा ऋषिं छन्दो दैवतं योगमेव च।**
**योऽध्यापयेज्जपेत्स्नायात्र स तत्फलमाप्नुयात्॥** (१.१.६)

इति। *नृसिंहपुराणे*ऽप्युक्तम् -

**ऋष्यादिकं परिज्ञाय जपयज्ञमतन्द्रितः।**
**अन्यथा कुरुते यस्तु स याति नरकं ध्रुवम्॥**

इति। श्रूयते *चार्षेयब्राह्मणे* - **यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वा ऋच्छति गर्तं वा पद्यति प्र वा मीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति** (१.१.६) इति। किं च छन्दोऽप्रतिपत्तानुष्ठाता मन्त्रकण्टको यागकण्टकश्च भवति। तदुक्तम् - **देव सवितर** इत्यादिमन्त्रभाष्यकृता *विद्यारण्येन*

**ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं स्वराद्यपि।**
**अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते॥**

इति। अत्र स्वरादयः *षड्गुरुशिष्ये*णोक्ताः -

**स्वरो वर्णोऽक्षरं मात्रा विनियोगोऽर्थ एव च।**
**मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे॥** (१.१.२)

इति। तेनैवोक्तम् -

**मन्त्राणां दैवतं छन्दो निरुक्तं ब्राह्मणान् ऋषीन्।**
**कृत्तद्धितादि चाज्ञात्वा यजन्तो यागकण्टकाः॥** (१.१.२)

इति *स्मृतिरत्ने*ऽप्युक्तम्-



**ऋषेर्हीनमनायुष्यं छन्दोभिर्व्याध्युपद्रवः।**
**देवताभिश्च मरणं वर्णैर्गोधननाशनम्॥**

इति। किं च अयमेव सूत्रकार उत्तरत्र छन्दोज्ञानवतः फलं **छन्दसां विचयं जानन्** (२.३ अन्ते) इत्यादिना वक्ष्यति। **तस्मादेतानि मन्त्रे मन्त्रे विद्याद्** (१.१.६) इत्यार्षेयब्राह्मणे विधिरपि भवति। अत्रस्थमन्त्राः ऋग्यजुःसामानि। तल्लक्षणमुक्तं *कर्ममीमांसा*सूत्रे - **तेषामृग्यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या। शेषे यजुःशब्दः** (मी.सू.२.३५.७) इति। तत्र ऋचां पादबद्धत्वात् छन्दो भवति। यजुषां तु पादाभावात् छन्दो नास्ति। साम्नां तु पादाभावात् छन्दो नास्तीति **गौतम**पक्षः। पादाभावेऽपि ऋग्द्वारा छन्दोऽस्त्येवेति **अन्येषां** पक्षः। तदुक्तं **निदान**कारेण - **नास्तीति गौतमः। अस्तीत्यन्ये। यच्छन्दस्कायामृचि गीयते तदस्य छन्दः। यद्देवत्यायां सास्य देवते** (नि.सू.१.१३) इति। तस्माच्छन्दोज्ञानमावश्यकम्॥ १॥

## त्रयश्छन्दःपादा भवन्ति॥ २॥

**तत्त्व०** :- छन्दसां पादाः **त्रयः** त्रिविधा **भवन्ति**। विधिमन्तरेणापरिमितानां पादानां त्रित्वानुपपत्तेरिति ध्येयम्॥ २॥

**छन्दो०** :- **अथावसानान्येकपद** (नि.२.३.१-२) इत्यादिना ऋक्पादा वक्ष्यन्ते। तत्र पादपरिभाषां वक्तुं पादविभागमाह - **त्रयश्छन्दःपादा भवन्ति** इति। **संख्याया अवयवे तयप्** (पा.५.२.४२) इत्यवयवार्थे विहिततयप्प्रत्ययान्तस्य **द्वित्रिभ्यां तयस्यायज्वा** (पा.५.२.४३) इति विहितायजादेशान्तस्य त्रयशब्दस्य छन्दःशब्देन

---

3. A उक्तं त्रि for उत्तरत्र
9. Om. पादाभावात् . . . . . . गौतमपक्षः।
10. S Om. इति अन्येषां पक्षः।
10. S Om. नास्तीति . . . . अन्ये।

कर्मधारयसमासे पश्चात् पादशब्देन षष्ठीसमासः । तथा चायमर्थः- अवयवत्रययुक्तच्छन्दसां पादा भवन्तीति। एतदुक्तं भवति। छन्दो द्विविधम्। अवयवयुक्तं निरवयवं चेति। तत्रावयवयुक्तं तु **चतुर्विंशत्यक्षरा गायत्री** (नि.सू.१.२.१) इत्यादिना वक्ष्यमाणमृषिच्छन्दः । तस्य देवासुरप्रजापतिच्छन्दसां समूहात्मकत्वात् तथैवावयवे वक्ष्यति। **तेषां त्रयं त्रयं समेत्यैकैकमृषिच्छन्दो भवति।** (नि.सू.२.२.९) इति। तदवयवत्वं देवादीनां छन्दसाम्। तदुक्तं यजुर्वेदसर्वानुक्रमणीकृता-

**देवासुराणां छन्दाँसि यानि यानि प्रजापतेः।**
**तानि त्वार्षस्य वर्गस्य विद्यादवयवान् पृथक् ॥**

इति । तदेवमवयवयुक्तं छन्दः ऋषिच्छन्दः । निरवयवच्छन्दो विधृत्यादिच्छन्दः । तस्मादृषिच्छन्दसां पादा भवन्तीति स्थितम् । अध्याहारात् सिद्धे भवन्तीत्येतन्नियमार्थम् । ऋषिच्छन्दसामेव पादव्यवस्था। न त्वन्येषामिति। तदुक्तं यजुर्वेदसर्वानुक्रमणीकारेण -

**छन्दोभिरार्षै रेवैतैर्ऋचः श्लोकाश्च वैदिकाः।**
**लौकिकाश्च प्रवर्तन्ते पादाश्चैष्वेव संस्थिताः ॥**

इति। त्रयश्छन्दःपादा भवन्तीत्यस्य छन्दःपादास्त्रयो भवन्तीति नार्थः। तथा चेत् ऋक्त्रयश्छन्दःपादा भवन्तीत्येवं सकारस्थानिकस्य श्रुत्वेन पठितव्यम्। तथा पाठाभावात्। पादचतुष्ट्यादियुक्तानुष्टुभादिच्छन्दःसु तदभावाच्च॥२॥

तान् पादान् दर्शयति -

**अष्टाक्षर एकादशाक्षरो द्वादशाक्षरः ॥ ३ ॥** इति।

4. S Om. अवयवे।
6. A after °कृता adds यास्केन।
8. S सार्षस्य for त्वार्षस्य
13. A after °कारेण adds यास्केन
15. A संहिताः for संस्थिताः



**तत्त्व०** :- इति। स्पष्टम्। अक्षरसंज्ञा ह्यचामेव। व्यञ्जनं त्वक्षराङ्गम्। न तदक्षरम्। **व्यञ्जनमपराङ्गं विरामे लुप्यते।** (पु.सू.७.३२) इति पुष्पसूत्रे व्यञ्जनानामङ्गत्वव्यपदेशात्। उक्तं च ***शौनकेन*** -

**सव्यञ्जनः सानुस्वारः शुद्धो वापि स्वरोऽक्षरम्।** (ऋ.प्रा.१८.३२) इति । अनुमतश्चायमर्थः आचार्यस्याच एवाक्षरमिति । यत्र ह्रस्वमक्षरमुपोत्तमं पादस्य भवति सा जागती वृत्तिर्यत्र दीर्घं सा त्रैष्टुभीति। ह्रस्वदीर्घाभ्याम् (दीर्घयोर्?) अक्षरस्य विशेषण(त्व)ादचामेव ह्रस्व(त्व) दीर्घत्वादयः । तथा च ***पाणिनिः*** **ऊकालोऽज्झस्वदीर्घप्लुतः** (पा.सू.१.२.२७) इति॥ ३ ॥

**छन्दो०** :- तान् पादान् दर्शयति - **अष्टाक्षरः** इति। **तनुमिश्रं दशाक्षरः** (नि.सू.१.१.४) इति दशाक्षरपादस्याप्यवरोहदर्शनात्। सप्ताक्षरादिपादानां दर्शनाच्च। **इति-** शब्द आद्यर्थे। यथा **ज्वलिति कसन्तेभ्यो णः** (पा.३.१.१४०) इति व्याकरणे। अत्र हल्सहिता अचः केवला अचश्चाक्षराणि स्वतन्त्राणीति निदानवचनात्। **निधनं च यथाम्नायं शाण्डिल्यः** (द्रा.श्रौ.६.२.२०) इत्यस्मिन् प्रधानसूत्रे **अष्टाक्षरद्वादशाक्षर**मित्यादौ स्वरैरेवाक्षरवर्णनात् (गणनात्?) इति ***धन्वि***वचनाच्च॥

**उदात्तश्चानुदात्तश्च वर्णानां प्रकृतौ स्वरौ।**

इति यत् ***केशवाचार्य***कृतयजुर्वेदसर्वसम्मतशिक्षावचनं तत्र वर्णा इत्यक्षराण्युच्यन्ते। व्यञ्जनसहिताः व्यञ्जनरहिताश्च स्वरा अक्षराणीति तद्भाष्यकारवचनाच्च । अचः अधिकृत्य **उभये त्वक्षराणि** (ऋ.प्रा.१.१९) इति **अनुस्वारं व्यञ्जनं चाक्षराङ्गम्** (ऋ.प्रा.१.२२) इति च ऋग्वेदप्रातिशाख्यकृच्छ***ौनक***वचनाच्च। तस्मादष्ट अक्षराणि हल्सहिताचः केवलाचो वा यस्य पादस्य स त्वष्टाक्षरः। एवमेकादशाक्षरो

19. A स्वरपञ्चाशत्कार for केशवाचार्य ... शिक्षा°

द्वादशाक्षर इत्यादयः पादा भवन्तीत्यर्थः। अचां व्यञ्जनसहितत्वं तु व्यञ्जनानामचं प्रत्यङ्गत्वात्। अत एव पुष्पसूत्रकारो **व्यञ्जनं स्वराङ्गं विरामे लुप्यते** (पु.सू.७.५.३२) इत्यवोचत्। व्यञ्जनानामस्मच्छन्दोविचित्यादौ अङ्गत्वबोधकशास्त्राभावेऽपि **अनुक्तमविरुद्धमपेक्षितमन्यतो ग्राह्यमिति** न्यायात्। यथा **आज्यमधिश्रित्योत्तरतः कुर्या**दित्यत्र गृह्यव्याख्याने शाखान्तरोक्तं कर्तव्यमित्यपेक्षापूरणमुक्तम्। तद्वदत्रापि **व्यञ्जनं स्वराङ्ग**मित्यादीनि यजुर्वेदप्रातिशाख्यवचनान्यवगन्तव्यानि। तथाहि - **व्यञ्जनं स्वराङ्गम्। तत्परस्वरम्॥ अवसितं पूर्वस्य। संयोगादि च॥ परेण चासंहितम्॥ अनुस्वारः स्वरभक्तिश्च। नान्तस्थापरमसवर्णम्। नासिक्याः। स्पर्शोष्मपर ऊष्मा चेत् परस्य** (तै.प्रा.२१.१-९) इति। अस्मिन्नर्थे *सूरिदेवबुधेन्द्रनन्दन-केशवाचार्ये*णापि सर्वसम्मतशिक्षायां श्लोकद्वयमुक्तम्। तद्यथा-

> व्यञ्जनं स्यात् परस्याङ्गं पूर्वस्यावसितं भवेत्।
> **परायुतमनुस्वारो योगादिर्भुक्तिरेव च॥**
> **असवर्णं परस्याङ्गमन्तस्थापरमक्षरम्।**
> **पराङ्गोष्मपराः सर्वे यमाश्चैवाङ्गनिर्णयः॥**

इति। **व्यञ्जनं स्वराङ्गम्** (तै.प्रा.२१.१) इत्यादीनामयमर्थः। व्यञ्जनं स्वराङ्गं स्वरस्य अचः अङ्गं भवति। अज्व्यतिरिक्ता वर्णा व्यञ्जनानि भवन्ति।

2. S तथा च for अत एव। S सूत्रे व्यञ्जनं पराङ्गं विरामे लुप्यते इति व्यञ्जनानामङ्गत्वमङ्गीकृत्य वररुचिवचनात् for सूत्रकारो . . . अवोचत्
3. S Om. व्यञ्जनानाम्
4. A trans. अपेक्षितम् after अन्यतः
6. S1-2 Om. उक्तम्
8. A तद्यथा for तथा हि
9. S Om. परेण चासंहितम्
10. S Om. स्पर्शोष्म° . . . परस्य
11. A इत्येव for इति। अस्मिन्नर्थे; A Om. सूरिदेवबुधेन्द्रनन्दन
12. A Om. सर्वसम्मतशिक्षायां श्लोकद्वयम्
18. S after स्वराङ्गम् ins. व्यञ्जनमव्यतिरिक्तं हल् चान्यच्च सर्वं; S Om. अज्व्यतिरिक्ता . . . °वचनात्



**शेषा व्यञ्जनानि** (तै.प्रा.१.६) इति प्रातिशाख्यवचनात्। अचां स्वर इति संज्ञा व्याकरणे प्रसिद्धा। कस्याऽचोऽङ्गमित्यपेक्षायामाह **तत्परस्वरम्** (तै.प्रा.२१.२) इति। तत् व्यञ्जनम्। परः स्वरः यस्माद्- व्यञ्जनात् तत् तथोक्तमिति यावत्। परस्याचोऽङ्गं भवतीत्यर्थः। उदाहरणं तु - **उपास्मै गायता नरः** (सा.६४७) इति अत्र पकार आकारस्याङ्गम्। तदङ्गत्वादेव पकारोऽपि स्वरितवद् भासते। **तदङ्गं तद्वत् उदात्तादिस्वरभाक् भवति** इत्येतत्तु सर्वसंमतशिक्षाव्याख्यात्रा उक्तम्। तद्यथा - **तथाह वररुचिः। स्वराणामेवोदात्तादयो धर्माः। व्यञ्जनानां तु तदङ्गतया तद्धर्मत्वमिति। उच्चैरुदात्तः** (पा.सू.२.१.२९) इत्यस्मिन् सूत्रे **तदङ्गं तद्भवति** (पा.म.२.१.२९) इति महाभाष्ये प्रपञ्चितम्। अत्र पकारस्य आकाराङ्गत्वात् आकारो व्यञ्जनसहितोऽक्षरम्। उकारस्तु केवलोऽक्षरम्। तथा **अग्न आ याहि** (सा.१) इत्यत्र यकारः पराकाराङ्गम्। अत्र तु आकारः स्वरितः। तदङ्गत्वात् यकारोऽपि स्वरितवद्भासते। **अवसितं पूर्वस्य** (तै.प्रा.२१.३) यत्र स्वरात् परं व्यञ्जनं तदनन्तरं संहिताध्ययनकाले विरामः तत्र तद्व्यञ्जनं पूर्वस्याङ्गं भवति। न तु पराङ्गम्। यथा **अथर्वाणो अशिश्रयुः** (सा.६४६) इति। अत्र यकारविसर्जनीयसहितस्यैव उकारस्याक्षरत्वात्

2. S after संज्ञा ins. हलां व्यञ्जनमिति संज्ञा;
3. S Om. तत् व्यञ्जनम्; A after स्वरः ins. अच्
4. A Om. इति यावत्; A परस्वरस्य for परस्य and Om. अचः। S यावत् for अर्थः
6. A Om. अपि
6. A Om. उदात्तादि; S. स्वरवत् for स्वरभाक्; S Om. सर्वसंमत . . . तद्धर्मत्वमिति। (1.85)
9. S Om. तदङ्गं . . . इति
10. A उक्तम् for प्रपञ्चितम्; S पाशब्दे for पकारस्य; S Om. आकाराङ्गत्वात्
11. S Om. अक्षरम्
12. S Om. पराकाराङ्गम्; A Om. तु
13. S Om. यकारोऽपि
14. A Om. संहिताध्ययनकाले
15. S Om. न तु पराङ्गम्

गायत्र्युत्तरा। **तस्या द्वे द्वे अक्षरे सशयनी व्यतिषजति** (ष.ब्रा.२.१.८) इति ब्राह्मणं भवति। **मध्यमस्य च पदस्योत्तमम्। उत्तमस्य च प्रथमम्। आथर्वाणो अशिश्रयुर्वन्दे वा यदा** (द्रा.श्रौ.२१.३.१८-१९) इति *द्राह्यायणो*क्तबहिष्पवमानार्चिकधूर्गाने अक्षरव्यत्यासपाठ उपपद्यते। **संयोगादि च** (तै.प्रा.२१.४)। द्वयोर्बहूनां (वा) संयोगो भवति। **हलोऽनन्तराः संयोगः** (पा.१.१.७) इति पाणिनिवचनात्। तस्य आदिव्यञ्जनं पूर्वस्वराङ्गं भवति। न तु परस्वराङ्गम्। **उच्चा ते जातमन्धसः** (सा.४६७) **तं त्वा समिद्भिरङ्गिरः** (सा.६६१) **चन्द्रमा अप्स्वन्तरा** (सा.४१७) अत्र चकारनकारपकाराणां पूर्वस्वराङ्गत्वात् एते तत्स्वरभाजो भवन्ति। तकारदकारसकाराः परस्वराङ्गानि भवन्तीति वक्ष्यते। **परेण चासंहितम्** (तै.प्रा.२१.५) परस्वरेण असंहितम् असंयुतम्। परस्वर-सन्निधौ न पठितमित्यर्थः॥

यत्र स्वरयोर्मध्ये नैकं व्यञ्जनं तत्राद्यं व्यञ्जनं पूर्वस्वराङ्गं भवति। यथा **तत्सवितुर्वरेण्यम्** इत्यत्र सकारात् पूर्वस्तकारः पूर्वाङ्गत्वात् उदात्तः। पूर्वाभावे पराङ्गम्। यथा **प्रेष्ठं वो अतिथिम्** (सा.२) इति। **त्वं नो अग्ने महोभिः** (सा.६) इति। अत्र पूर्वाभावात् पराङ्गमेव भवति।

**ननु संयोगादि** (तै.प्रा.२१.४) इति सूत्रमनर्थकम्। **परेण चासंहितम्** (तै.प्रा.२१.५) इत्यनेनैव तदुदाहरणानां पूर्वस्वराङ्गत्वसिद्धेः। मैवं मंस्थाः। **एना विश्वान्यर्य आ** (सा.६७४)। **अथर्वाणो अशिश्रयुः** (सा.६४६) इत्यत्र यकारवाकारयोः **रेफात् परं च** (तै.प्रा.१४.४) इति द्वित्वे कृते प्रथमयकारवकारयोः **परेण चासंहितम्** (तै.प्रा.२१.५) इत्यनेन पूर्वस्वराङ्गत्वं प्राप्तम्। रेफस्य तु **नान्तस्थापरमसवर्णम्** (तै.प्रा.२१.७)

4. S गानं for गाने; S Om. अक्षरव्यत्यासपाठः
5. S Om. द्वयोर्वहूनां . . . पठितमित्यर्थः (1.17)
13. A Om. यत्र . . . व्यञ्जनं; A तद् for तत्राद्यं; S पूर्वाङ्गे for पूर्वस्वराङ्गं; S after भवति adds : पूर्वाभावे पराङ्गं भवति
14. A Om. यथा
15. A Om. पूर्वाभावे . . . यथा; S Om. त्वं नो . . . उपतिष्ठते (p.13, 1.10)



इत्यनेन परस्वराङ्गत्वं प्राप्तम्। तच्चाशक्यम्। तथोच्चारणासम्भवात्। तस्मादन्यतरबाधे कर्तव्ये किं वा बाध्यमित्यपेक्षायां **संयोगादी**(तै.प्रा.२१.४)ति सूत्रं रेफस्य पूर्वाङ्गत्वं विधातुमुपतिष्ठते॥

**अनुस्वारः** (तै.प्रा.२१.६)। अनुस्वारोऽपि पूर्वस्वराङ्गं भवति। यथा **मंहिष्ठो मत्सत्** (सा.६८३) इति। अत्र अनुस्वारः। पूर्वाङ्गत्वात् वामदेव्ये साम्नि **मंहिष्ठो मत्स** इत्यत्र **व्यञ्जनमपराङ्गं विरामे लुप्यते** (पु.सू.७.५.३२) इत्यस्मिन् सूत्रे फुल्लभाष्यकारेण पूर्वाङ्गत्वेन विना पराङ्गत्वादनुस्वारलोपः प्रतिपादितः॥

**स्वरभक्तिश्च** (तै.प्रा.२१.६) पूर्वस्वराङ्गं स्वरभक्तिश्च भवति। **रेफोष्मसंयोगे रेफस्वरभक्तिः** (तै.प्रा.२१.१५) इत्युक्तम्। यत्र तु **ऋवर्णस्य वृद्धमृवर्णं सर्वमार्भवति** (पु.सू.६.६.१) इति आर्भावः। तत्र रेफः पूर्वस्वराङ्गं भवति। यथा **वयमु त्वा** (सा.७०८) सौभरे **त्वामिध्यावितारं ववृ** (सा.७०९) इत्यत्र ववृशब्दस्य ऋवर्णस्य गाने वृद्धत्वात् आर्भावात् तत्र रेफो भवति। तस्य पूर्वाङ्गत्वात् **व्यञ्जनमपराङ्गं विरामे लुप्यते** (पु.सू.७.५.३२) इति लोपे सति **त्वामिध्यवितऽऽरां ववाँऽ२३हो** इति गानम्। **नान्तस्थापरमसवर्णम्** (तै.प्रा.२१.७)। अन्तस्था यरलवाः। ताः पराः यस्माद्व्यञ्जनात् तद्व्यञ्जनम्, तस्या

5. A Om. यथा; A after इति ins. आदौ and Om. अत्र; A Om. इति; S Om. अत्र
6. A स्वराङ्गं for अपराङ्गं
7. A Om. पूर्वाङ्गत्वेन . . . °ङ्गत्वात् (1.15)
9. S Om. पूर्वस्वराङ्गं . . . इत्युक्तम् (1.16)
10. S Om. तु
11. A Om. ऋवर्णस्य; A after इति adds : फुल्लेन
12. A विहितः। सोऽपि स्वरभक्तिर्भवति for तत्र रेफः पूर्वस्वराङ्गं भवति; A उदाहरणम् for यथा
15. . . . लुप्यते vide पुष्पसूत्रभाष्यम्; S लोपः for लोपे सति; S Om. त्वामिध्य° . . . गानम्
17. S Om. यरलवाः। ताः; S Om. तस्या अन्त° . . . विलक्षणम्

अन्तस्थायाः असवर्णे विलक्षणं पूर्वस्वराङ्गं न भवति। किं तु परस्वराङ्गम्। यथा - **विश्वेषां हित** (सा.२) इत्यत्र शकारः अतः एव स्वरितः। **तं त्वा समिद्भिरङ्गिरः** (सा.६६)। **चन्द्रमा अप्स्वन्तरा** (स्त.४१७) अत्र तकारदकारसकाराः परस्वराङ्गानि भवन्ति। न तु **परेण चासंहितम्** (तै.प्रा.२१.५) इति पूर्वस्वराङ्गानि भवन्ति। **प्र तु द्रव** (सा.५२३) इत्यत्र उकारात् परं दकारद्वयम्। ततः परो रेफः। तत्र द्वितीयदकाररेफौ पराङ्गे। पूर्वदकारस्तु **संयोगादि च** (तै.प्रा.२१.४) इति वचनात् पूर्वाङ्गम्। अत एव **व्यञ्जनमपराङ्गम्** (पु.सू.७.५.३२) इत्यत्र फुल्लभाष्यकारेण औशने **प्रतुदद्रवे**त्यत्र पूर्वदकारलोप उदाहृतः। विशेषशब्दसमभिव्याहारे सामान्यशब्दस्य तदितरपरत्वमिति न्यायेनेत्यर्थः। यत्राचः पराद्रेफात् परो यकारो वकारो वा तत्र **संयोगादीति** वचनाद्रेफः पूर्वाङ्गम्। न तु **नान्तस्थापरमसवर्णम्** (तै.प्रा.२१-७) इति पराङ्गम्। न तु **नान्तस्थापरमसवर्ण**मित्यस्मिन् सूत्रे गोबलीवर्दन्यायेन अन्तस्थाव्यतिरिक्तव्यञ्जनस्य ग्रहणात्। उदाहरणं तु **पर्यू षु प्र धन्व** (सा.४२८)॥

**नासिक्याः** (तै.प्रा.२१.८)। नासिक्याः परस्वराङ्गानि भवन्ति। यत्र संयोगान्त्यव्यञ्जनानि ञमङणनानि तत्पूर्वं स्पर्शः ससंयोगः नासिक्यसंज्ञो भवति। **स्पर्शादनुत्तमादुत्तमपरादानुपूर्व्यात् नासिक्याः**

2 3 1 2

(तै.प्रा.२१.१२) इति वचनात्। उदाहरणं तु **अग्ने आयाहि** (सा.१)

---

1. S पूर्वस्याङ्गं for पूर्वस्वराङ्गं; A अर्थात् for किं तु; S परस्य for परस्वराङ्गम्, A after परस्वराङ्गम् adds : तत् भवति
2. A Om. यथा; S Om. तंत्वा . . . पूर्वस्वराङ्गानि भवन्ति
6. A after द्वयम् adds : अस्ति; A तत्र for ततः
8. A स्वराङ्गम् for अपराङ्गम्
9. A Om. विशेष° . . . प्र धन्व
16. S Om. नासिक्याः . . . भवन्ति
17. S संयोगान्त्यं व्यञ्जनमनुनासिकः for संयोगान्त्य . . . ञमङणनानि
18. S परस्याङ्गं for नासिक्यसंज्ञो; S Om. स्पर्शाद् . . . इति वचनात्



2 1 2

इत्यत्र ग्नशब्दः अत एव अनुदात्तः। अत्राद्योऽकारः केवलोऽक्षरम्। **यज्ञायज्ञा** (सा.३५) इत्यत्र ज्ञशब्दौ। अत एव तत्र आद्यज्ञशब्दः उदात्तः। अपरस्तु प्रचयः पराङ्गत्वादेव। **व्यञ्जनमपराङ्गम्**। (पु.सू. ७.५.३२) इत्यत्र फुल्लभाष्ये परस्याङ्गमिति किम् ? यज्ञायज्ञ इति लोपाभावः प्रत्युदाहृतः।

**स्पर्शश्चोष्मपर ऊष्मा चेत् परस्य** (तै.प्रा.२१.८)। ऊष्मपरः स्पर्शश्च परस्याङ्गं भवति। असावूष्मा परश्चेत् परस्वर ऊष्मणश्चेदित्यर्थः। उदाहरणं वेदान्तरे द्रष्टव्यम्। तस्माद् **व्यञ्जनं स्वराङ्गम्** (तै.प्रा.२१.१) इत्यादीनि सूत्राणि विमृश्य यस्याचः व्यञ्जनमङ्गं भवति स व्यञ्जनसहितोऽक्षरम्। यस्याचः व्यञ्जनमङ्गं न भवति स केवलोऽजक्षरम् इत्यवगन्तव्यम्। एवं व्यञ्जनानामचां प्रत्यङ्गत्वात् रथन्तरसाम्नि संहितोपनिषद्विहितभकाराणां प्रयोगव्यवस्था भवति। सूत्रकारेण विहितभकारप्रयोगे तु **भकारादिभिरकारान्तैः** (द्रा.श्रौ.६.१.१६) इति वचनेनैव व्यवस्थायाः सिद्धत्वात्। यथा **रथन्तरेऽन्वक्षरं भकारान् स्वरवन्ति व्यञ्जनानि यथाक्षरं दर्शयेत्** (सं.उ.ब्रा.२.१८-१९) इति संहितोपनिषदि श्रूयते। अस्यायमर्थः। रथन्तरसाम्नि उद्गाता स्वरभक्तिं गायन् अन्वक्षरं प्रत्यक्षरं भकारान् व्यञ्जनानि भकाररूपव्यञ्जनानि हलः यथाक्षरं स्वरवन्ति तस्य तस्याक्षरस्य यः स्वरः अच् अकारादिस्तत्सदृशस्वरयुक्तानि **दर्शयेत्**। वाचा उच्चारयेत् इति। अत्र

---

1. S Om. अत एव
3. A स्वराङ्गम् for अपराङ्गम्
5. S Om. स्पर्शश्चोष्मपरः . . . द्रष्टव्यम्
8. S Om. यस्याचः व्यञ्जनमङ्गं भवति स व्यञ्जनसहितोऽक्षरम्
9. S after यस्याचः adds : किमपि; S तस्य व्यञ्जनसहितस्याक्षरत्वम् for स . . . अक्षरम्
11. A सिध्यति for भवति
13. SA before यथा add : संहितोपनिषद्
15. S Om. संहितोपनिषदि
18. S Om. तत्सदृश°

**स्वरवन्ती**ति वचनात् तत्रत्यदकारगकारादीनां हलां विसर्जनीयस्य च वाचा अनुच्चारणमर्थादुक्तं भवति । यथाश्रुतान्यक्षराणि तु मनसा ध्यायेदित्यप्यर्थादुक्तं भवति। अयं च भकारनिवेशः प्रतिहारात् प्राक् चतुरक्षरं हित्वा कर्तव्यः (vide प्र.हा.अज्भिःरुह ११.३४) इति प्रतिहारभाष्यादावुक्तः । अत्र अज्भिः सह भकारप्रयोगस्तु **रथन्तरेऽन्वक्षरम्** (सं.उ.ब्रा.२.१८) इति वचनात् गानानुसारेण कर्तव्यः।

2 0 0 0 0
गानं तु प्रथमस्तोत्रीयायाम् - **आदुग्धा इव धेनव ईशानमस्यजगतः** ।

2 0 0 0 0
द्वितीयायाम् - **नामिन्द्रसुस्थुषों नत्वावाँ अन्योदिवियः** । तृतीयायाम्

2 0 0
- **तो न जनिष्यते अश्वायन्तो मघवन्** (र.द.१) इति । अत्र **जगतः दिवियो** इति उभयत्र सन्धिगानं तु **भक्तिमध्यः पादमध्यश्चास्तोभे प्रत्यये संध्यगीतः सर्वत्र** (पु.सू.६.४.१) इति पुष्पवचनात्। **दिव्यो रथन्तरबृहती** (पु.सू.६.६५) इतिवत् सन्धिगानापवादपदगान-विधानाभावाच्च । यद्येवं दिवियो इतिवत् जगतो इति गातव्यमिति चेत् । उच्यते। अत्र जगत इत्येव सन्धिगानम् । **जगतः स्वर्दृशम्** (ऋ.वे.७.३२.२२) इत्येव ऋक्संहितापाठात् । तत्र वा कथमिति चेत् । उच्यते । **वा शरि** (पा.८.३.३६) इति व्याकरणसूत्रेण परस्परविकल्पेन सत्वविसर्जनीययोरेव विधानात् । अत्र दिव्योशब्दस्तु विकृष्ट इति विकर्षेण

1. A न्धकार for गकार
5. S तत्रापि for अत्र अज्भिः सह भकारप्रयोगस्तु
7. S Om. प्रथमस्तोत्रीयायां, A आका for आ
8. S Om. द्वितीयायाम्, A नाका for ना; S Om. तृतीयायाम्
9. A तोका° for तो
11. S after फुल्ल° ins. सूत्र°
13. S Om. °विधान°
14. S Om. अत्र जगत इत्येव सन्धिगानम्
16. S Om. व्याकरण°



**तुव वृत्राणि** (नि.सू.१.१.१३) इत्यत्र वक्ष्यामः । **गिरागिराप्रप्रनशंसिषं तस्थुषश्चेत्यनुब्राह्मणं स्वाध्याये** (पु.सू.८.८.२५) इति पुष्पवचनात् सुस्थुष इति गानम् । ननु दिवियो इति यदि सन्धिगानं तदा **दुगीदौदुरथन्तराणि** इति छलाक्षरपाठविरोधः स्यात् । मात्राह्रासाद्दीर्घाधिक्याच्चेति चेत् । उच्यते । छलपाठो नादरणीयः । तस्यानार्षत्वात् । महर्षिप्रणीतपुष्पविरोधाच्च। **दिवियो** इति सन्धिपाठानुसारेणैव प्रतिहारभाष्यकार**वरदराज**प्रयोगकारत्रैविद्य-वृद्धतालवृन्तनिवासिभ्यां भकारपाठे भिभिभो इत्येव पाठप्रदर्शनाच्च । तस्मात् **बीगीदौदुरथन्तराणी**त्येव छलपाठः कर्तव्यः । एवं स्थिते भकाराणां प्रयोगव्यवस्थां ब्रूमः । भकाराणां व्यञ्जनत्वव्यभिचाराभावात् संहितोपनिषदि **भकारान् स्वरवन्ति व्यञ्जनानि** (सं.उ.ब्रा.२१८) इति व्यञ्जनकीर्तनं व्यञ्जनकार्यार्थम् । तत् कार्यं तु **व्यञ्जनं स्वराङ्गम्। तत्परस्वरम्।** (तै.प्रा.२१.१.२) इति प्रातिशाख्यकारेणोक्तम्। तस्यार्थस्तु इदानीमेवोक्तः । तस्मात् तस्याक्षरस्य आर्चिकेन सह भकारोच्चारणे (. . . . . . . . . . तत्र प्रथमायां स्तोत्रीयायां यथा - ओं ओं वाक् भा भु भाभि भ भे भ भ भी भा भ भ भ भ भः । इति। द्वितीयायाम् - ओं वाक् भाभि भ भु भु भो भ भा भा भ भो भि भि भो । इति । तृतीयायाम् - ओं वाक् भो भ भ भि भ भा भ भो) भ भ भि इति । अत्र द्वितीयायां स्तोत्रीयायां नवमो भशब्दः सानुनासिकाकारवान्। तदाकारस्य मुखनासिकोच्चार्यमाणत्वात् । कुत एतत्? उच्यते । **नत्वावाँ अन्य** इत्यत्र वान्शब्दनकारस्य **दीर्घादटि समानपदे** (पा.८.३.९) इति व्याकरणसूत्रेण रुर्विहितः । तत्र **अत्रानुनासिकः पूर्वस्य तु वा** (पा.८.३.२) इत्यनेन सूत्रेण विहितानुनासिकविकल्पे प्राप्ते **आतोऽटि नित्यम्** (पा.८.३.३) इति

1. A Om. गिरा इति गानम्
3. A trans यदि after ननु
7. S Om. पाठ; S Om. °वरदराज°; A Om. °कार° . . . भ भ भ भि इति, vide प्र.सू. 11.34.

नित्यमनुनासिको विहितः । तेन **अनुनासिकात् परोऽनुस्वारः** (पा.८.३.४) इत्यस्याप्रवृत्तेः सानुनासिक एवाकारः । न तु निरनुनासिकः। नापि सानुस्वारः । तस्मात् तदाकारेण सहोच्चार्यमाणो भकारोऽपि सानुनासिकाकारवानेव । ननु **आतोऽटि नित्यम्** (पा.८.३.३) इत्यत्र काशिकायां वृत्तौ **महाँ इन्द्रो य ओजसा** (सा.१३००) इति **केचिदनुस्वारमधीयते** इत्युक्तमिति चेत् उच्यते । प्रकृते किमायातम्? तस्य ऋगन्तरस्थत्वात् । तत्र पदमञ्जर्यादौ **केचिदिति तैत्तिरीयाः** इत्युक्तत्वात्। तस्मात् **न त्वावाँ अन्य** इत्ययमाकारः सानुनासिक एव । एवं रथन्तरसामगाने भकारप्रयोगव्यवस्थायां च हेतुः ब्राह्मणभाष्यकारकल्पभाष्यकारप्रतिहारभाष्यकारपुष्पभाष्यकारपुष्पसङ्ग्रहकार श्रौतप्रयोगकारत्रैविद्यवृद्धतालवृन्तनिवासिषु मध्ये केनापि नोक्तः इत्यलं विस्तरेण ॥ ३ ॥

**तत्त्व०** - ननु चतुर्थोऽपि छन्दःपादोऽस्ति दशाक्षरः । तत् कथमुक्तं **त्रयच्छन्दः पादा भवन्तीत्यत** आह-

## तन्मिश्रं दशाक्षरः ॥ ४ ॥

तन्मिश्रं छान्दसं नपुंसकम् । तन्मिश्रस्तेष्वन्तर्भूतो दशाक्षरः पाद इत्यर्थः । तत्रैकादशाक्षरपादे दशाक्षरपादोऽन्तर्भवति । वृत्तिसारूप्यात् संख्यासामीप्याच्च । अत एव त्रिष्वेवान्तर्भावात् पृथक् प्रतिक्रमाभिक्रमौ नोक्तौ ॥ ४ ॥

**छन्दो०** - अथ पादपरिभाषामाह - **तनुमिश्रमिति**। दशाक्षरपादः

15. A तनु° for तन्°, S splits the sutra into two : तन्मिश्रम् and दशाक्षर

20. S तन्मिश्रमिति । तदन्तर्भूतमित्यर्थः । अष्टाक्षराद्यभावेऽपि तत्त्वेन व्यवह्रियमाणं पादमिति यावत् ।

प्रतिज्ञातं प्रतिपादयति - दशाक्षर इति । आ नवाक्षरताया अवरोहतीति शेषः। **यं ते सुषाव हर्यश्वाद्रिः** (सा. ३९८) इत्यादेर्दशाक्षरपादविकारनवाक्षरपादत्वेन दर्शनात् दशाक्षरपादो नवाक्षरपर्यन्तमवरोहतीत्यर्थः । दशाक्षरपादनवाक्षरस्य for तनुमिश्रमिति . . . . आर्षः (p.19, 1.2)



स्वापेक्षया तनुना स्वल्पाक्षरेण पादेन [नवाक्षरपदेन] अष्टाक्षरपादेन च मिश्रं मिलितो भवति । नवाक्षरपादोऽष्टाक्षरपादोऽपि दशाक्षरपादसंज्ञो भवतीत्यर्थः । मिश्रमिति नपुंसकप्रयोग आर्षः । उदाहरणम्- **यं ते सुषाव हर्यश्वाद्रिः** (सा.३९८) । [नवाक्षरस्य] **स्वस्ति न इन्द्रो वृद्धश्रवाः** (सा.१८५९) अष्टाक्षरस्य **स्वर्गमर्वन्तो जयत** (सा.४३५) अनयोर्दशाक्षरपादत्वात् । **दशाक्षरपादा विराज एकपदाप्रभृतय आचतुष्पदाभ्यः** (नि.सू.२.१.१५) इत्यनेन विराड्लक्षणेन **पिबा सोमम्** (सा.३९८) **स्वस्ति नः** (सा.१८६५) इत्यनयोः ऋचोः **आविर्मर्या आ वाजम्** (४२५) इत्यस्याश्च विराट्च्छन्दः सिद्ध्यति ॥ ४ ॥

**तत्त्व०** - भवतु दशाक्षरपाद इहैवान्तर्भूतः । तथापि अन्ये सन्ति पञ्चाक्षरप्रभृतयः इत्यत आह - **अष्टाक्षर आपञ्चाक्षरतायाः प्रतिक्रामति** (नि.सू.१.१.५) इत्यादि **अर्चामि सत्य सवम्** (नि.सू.१.१.१३) इत्यन्तम् । तथा च पञ्चाक्षरपादादयोऽष्टादशाक्षरपादान्ता-स्त्रिष्वेवान्तर्भवन्तीति न प्रकारान्तरप्रसक्तिरिति भावः । अक्षरार्थस्तु -

1 2 3 2

## अष्टाक्षर आ पञ्चाक्षरतायाः प्रतिक्रामति विश्वेषां हितः (सा.२) इति ॥ ५ ॥

इति । पञ्च अक्षराणि यस्य सः पञ्चाक्षरः । तस्य भावः पञ्चाक्षरता । **आ पञ्चाक्षरतायाः** पञ्चाक्षरतापर्यन्तम् । अष्टाक्षरः पादः प्रतिक्रामति न्यूनो भवति । अत्रोदाहरणम् - **विश्वेषा॰ हितः** (सा.२) इति **अयं त्वमग्ने यज्ञानाम्** (सा.२) इति गायत्र्या द्वितीयः पादः ।

नन्वत्र ***शौनकेन*** -

5. S Om. अष्टाक्षरस्य . . . जयत ।

8. S Om. आविर्मर्या . . . इत्यस्याश्च

9. S सिद्धं भवति for सिद्ध्यति

10. S[1] ननु for भवतु

**उत्तरोत्तरिणः पादाः षट् सप्ताष्टाविति त्रयः ।**
**गायत्री वर्धमानैषा त्वमग्ने यज्ञानाम् ।** (ऋ.प्रा.१६.२४) ॥

इति। पादकल्पनेन द्वितीयपादस्य सप्ताक्षरत्वावगमात्कथमस्य पञ्चाक्षरत्व-निर्णयः? उच्यते। **होता** इति पदस्य पूर्वत्रान्वयमभ्युपगम्य द्वितीयः पादः पञ्चाक्षर इत्याहाचार्यः । ***शौनक***स्तु **होते**त्यस्य **विश्वेषा**मित्यत्रान्वयमभ्युपेत्य सप्ताक्षर इत्यवोचत् । अर्थवशेन पादव्यवस्थेति न्यायविदः। अत्र मतभेदेन व्यवस्थितोऽस्य विकल्प इति न विरोधः। षडक्षरसप्ताक्षरयोरुदाहरणं तु **मित्रमिव प्रियम्** (सा.५) **परमाच्चित्सेधस्थात्** (सा.८) इति ॥ ५ ॥

**छन्दो०** – **अष्टाक्षरः . . . इतीति** । अभिविधावयमाङ् अष्टाक्षरपादः पञ्चाक्षरपादमभिव्याप्य अवरोहतीत्यर्थः । अस्य सप्ताक्षराद्यवरोहस्य उदाहरणानि **अग्ने रथन्नवेद्यम्** (सा.५) **प्रेष्ठं वो अतिथिम्** (सा.५) पञ्चाक्षरस्य **विश्वेषां हितः** (सा.२) **स्वाध्यः स्वर्विदः** (सा.५४८)। पञ्चाक्षरपादस्य**विश्वेषां हित** इति स्वयमेवोदाहृतं तु आङः अभिविधौ मर्यादायामिति प्रदर्शनार्थम्। यद्वा **त्वमग्ने यज्ञानाम्** (सा.२) इत्यस्याः छन्दोगानामाद्योऽष्टाक्षरः पादः। मध्यमः पञ्चाक्षरः। अन्त्योऽष्टाक्षर इति दर्शयितुमेवं पादच्छेदे तेषा**मृग्यत्रार्थवशेन पादव्यवस्थे**ति कर्ममीमांसासूत्रमप्युपपद्यते । बह्वृचास्तु अस्याः षट्सप्ताष्टाविति क्रमेण पादान् कृत्वा वर्द्धमाना गायत्रीति वदन्ति। तदुक्तं ***शौनकेन*** -

**उत्तरोत्तरिणः पादाः षट् सप्ताष्टाविति त्रयः ।**
**गायत्री वर्धमानैषा त्वमग्ने यज्ञानामि**ति(ऋ.प्रा.१६.२४) ॥

तस्मात् **अग्ने रथं न वेद्यम्** ( ) इत्यादीनामष्टाक्षरपादत्वात् **प्रेष्ठं वः** (सा.५) **त्वमग्ने** (सा.२) इत्यनयोः **ऋचोश्चतुर्विंशत्यक्षरा गायत्री**

13. S Om. पञ्चाक्षरस्य
14. A पञ्चाक्षरस्य for पञ्चाक्षरपादस्य
19. S after उक्तं adds : बह्वृचोत्तमेन



त्रिपदा अष्टाक्षरपादा इत्यनेन गायत्रीछन्दो भवति । **पवन्त** (सा) इत्यस्याः **द्वात्रिंशदक्षरानुष्टुप् चतुष्पदा अष्टाक्षरानुष्टुप्** (नि.सू.१.२.७) इत्यनेनानुष्टुप्छन्दो भवति। ननु अनया परिभाषया अष्टाक्षरत्वे सिद्धेऽपि चतुर्विंशत्याद्याक्षराभावात् कथं गायत्र्यादित्वमिति चेत् । यदत्र वक्तव्यं तत्सर्वं गायत्रीप्रकरणे वक्ष्यामः ॥ ५ ॥

## आ चतुरक्षरताया इत्येके ॥ ६ ॥

**तत्त्व०** - इति। **एके** आचार्याः। अष्टाक्षरपादः **चतुरक्षरतायाः**
23 3 1 2 3 1
पर्यन्तं प्रतिक्रामति। उदाहरणम् - **न तमꣳहो न दुरितम्** (४२६) इति
2 3 1 2
पङ्क्तौ **अति द्विष** इति पञ्चमः पादः। न चैषोपरिष्टाद्बृहतीति वाच्यम् ।
3 1 2 3 1
तथा सति **अभि त्वा शूर नोनुमः** (सा.२३३) इत्यादौ बृहत्यामेव समाम्नातं स्यात्। न च तथाम्नायते। पङ्क्तिसन्निधावाम्नायते। तस्मात् प्रायः पाठाभावात् पङ्क्तिरेवेति गृह्णीमः इति ॥ ६ ॥

**छन्दो०** - एके आचार्याः अष्टाक्षरपादश्चतुरक्षरपादमभिव्याप्य अवरोहतीति एके आचार्या आहुः। उदाहरणं तु शाखान्तरे द्रष्टव्यम् ।
23 3 1 2 3 1
अष्टाक्षरपादस्य चतुरक्षरपर्यन्तमवरोहणात् **न तमꣳहो न दुरितम्** । (सा.४२६) इति। अस्याश्चत्वारिंशदक्षरा पङ्क्तिः पञ्चपादाष्टाक्षरपादेति पङ्क्तित्वं भवति। **बह्वृचास्तु न तमंहो** नेत्यस्या उत्तमं पादं द्वादशाक्षरं कृत्वा उपरिष्टाद्बृहतीत्याहुः। तदुक्तं ***शौनकेन*** -

3. S after ननु adds : एवमष्टाक्षराद्यभावेऽपि; S अष्टाक्षरादिपादत्वे for अष्टाक्षरत्वे
13. A trans. एके आचार्याः after अवरोहतीति।
14. A वदन्तीत्यर्थः for आहुः; A अति द्विषः for शाखान्तरे द्रष्टव्यम्

**अष्टाक्षरास्त्रयः पादा उत्तमो द्वादशाक्षरः।**
**उपरिष्टाद्बृहत्येषा न तमंह** (ऋ.१०.१२६.१) **उदाहृतम् ॥**
(तु.ऋ.प्रा.१६.४५.६) इति ॥ ६ ॥

**आदशाक्षरताया अभिक्रामति। वयं तदस्य**
**संभृतं वसु** (ऋ.८.४०.६) **इति** ॥ ७ ॥

**तत्त्व०-** अष्टाक्षरपादो दशाक्षरपर्यन्त**मभिक्रामति** वर्धते । तत्रोदाहरणम्- **वयं तदस्य** (ऋ.८.४०६) इति । अयम् **अपि वृश्च पुराणवत्** (ऋ.८.४०.६) इति षट्पदाजगत्याश्चतुर्थः पादः । अस्यास्त्वष्टाक्षरपादेति लक्षणमिति। नवाक्षरस्य **न देवो वृतः शूर इन्द्रः** (सा.१९६) इति ॥ ७ ॥

**छन्दो० - अष्टाक्षर** इत्यावर्तते । अष्टाक्षरपादो दशाक्षरपादपर्यन्तमारोहतीत्यर्थः । नवाक्षरस्योदाहरणम् - **सदा व इन्द्रश्चर्कृषदा** (सा.१९६)। **नमः सखिभ्यः पूर्वसद्भ्यः** (सा.१८२२)। **तवाहमस्मि सख्येन्योकाः** (सा.१८२०) दशाक्षरस्य स्वयमेवोदाहरति **वयं तदस्ये**त्यादिना। एतत् ऋग्वेदे **अपि वृश्च पुराणवत्** (ऋ.८.४०.६) इत्यस्यामृचि । सामवेदे तु **कदा वसो स्तोत्रँ हर्यते** (सा.२२८) । **मधोश्चकानश्चारुर्मदाय** (सा.९४६) । **ससाहे शत्रून्मदे सोमस्य** (सा.९४८)। मधोश्चकानः - ससाहे - इत्यनयोः पादव्यवस्थामनन्तरमेव वक्ष्यामः। तस्मात् **सदा व इन्द्र** इत्यादीनामष्टाक्षरपादत्वात् **सदा व इन्द्रः** (सा.२२८) **नमः सखिभ्यः** (सा.१८२२) । **कदा वसो** (सा.२२८) इत्येतासाम् ऋचां **चतुर्विंशत्यक्षरा गायत्री** (नि.सू.१.२.१) इत्यादिना

9. S[1] अष्टाक्षरपाद इति, S[2] अक्षरपाद इत्ति for अष्टाक्षरपादेति; S[2] लक्ष्यम् for लक्षणम्
11. A अष्टाक्षरपादः for अष्टाक्षरः; S[1] वर्तते for आवर्तते
16. S[2] अपि for तु, A after तु adds :- हेमन्तः शिशिर इन्नुरन्त्यः
17. S trans. मधोश्चकानश्चारुर् . . भवति (vide pp.27, ln.13) after अनुकूलं भवति



गायत्रीछन्दो भवति । **योजागार** (सा.१८२०) इत्यस्या **अथ यत्रोत्तमोऽष्टाक्षरस्तां ज्योतिष्मतीत्याचक्षते** (नि.सू.१.४.२) इत्यनेन ज्योतिष्मती त्रिष्टुभ् भवति। **अपि वृश्च पुराणवत्** (ऋ.८.४०.६) इत्यस्या *वररुच्युक्त*षडष्टका वा महापङ्क्तिरिति महापङ्क्तिच्छन्दो भवति। **वसन्त इन्नु रन्त्यः** (सा.६१६) इत्यस्या **द्वात्रिंशदक्षरानुष्टुप्** (नि.सू.१.२.८) इत्यादिना अनुष्टुप् छन्दो भवति । कल्पभाष्यादौ चयनोपस्थाने अस्या बृहतीच्छन्द इति यदुक्तं तन्न संगच्छते। त्रिंशदक्षरत्वात् संनिहितानुष्टुप्त्वं परित्यज्य बृहतीकल्पनस्यानुचितत्वात् । **इन्द्र जुषस्व** (सा.९४६) **इन्द्रस्तुराषाट्** (सा.९४८) इति तृचाद्यन्तयोः ऋचोः पूर्वोक्तानुष्टुब्लक्षणेन **राट् सम्राट् विराट्** (नि.सू.१.५) इत्यादिना च स्वराडङ्गानुष्टुप्छन्दो भवति। **मधोश्चकानः** (सा.९४६) **ससाहे** (सा.९४८) इत्यनयोः पदयोः व्यवस्थां ब्रूमः । तथा च ***धन्वी*** अष्टाविंशे पटले **इन्द्र जुषस्वेति** वा अधिकारः **शक्करीप्रवादाभ्याम्** (द्रा.श्रौ.२८.२.५) इति सूत्रस्य व्याख्यानसमये **इन्द्र जुषस्व** (सा.८४६) इत्यस्या उत्तमपादो दशाक्षर इत्यवोचत्।

ननु प्रतिहारसूत्रभाष्यकार*वरदराजेन* **गौरीवितं सूनुं सुत्या** (प्र.सू.४.४१) इत्यस्य व्याख्यानसमये **तृतीयपादाभ्यासश्चतुर्थ-पादस्थानीयस्तत्र चतुरक्षरमाद्यं प्रतिहारः। उत्तमं पदं प्रतिहारस्थानम् (प्र.सू.१.२) इत्युक्तत्वात्। इन्द्र जुषस्वेत्यत्र चकानश्चा इति प्रतिहार** इत्युक्तम्। तथैव **सूनुं सत्या** इति कवर्गीयपञ्चमवर्गानुनासिकाद्यवर्णस्वरवत् **चकानश्चा** इत्यूहाध्ययने स्वरोऽप्यधीयते । तस्मादुत्तमपादः

2. A Om. इत्याचक्षते
4. S Om. वसन्तः . . . अनुचितत्वात्
9. A अत्र for इन्द्रस्तुराषाट्
9. S द्वात्रिंशदक्षरानुष्टुप् चतुष्पादाष्टाक्षर-पादेत्यनेन च for पूर्वोक्तानुष्टुब्लक्षणेन
10. S अनुष्टुप्त्वं for अनुष्टुप्छन्दो
11. S Om. मधोश्° . . . ब्रूमः
12. A after ब्रूमः। adds : अत्र च
20. A उत्क्रम् for उत्तम°

**चकानश्चारुर्मदाय** (सा.८४६) इत्यष्टाक्षर एव भवितुमर्हतीति । तदादिमत्वात् प्रतिहारस्य । न च दशाक्षरपादत्वेऽप्यपदादौ प्रतिहारो **विच्छन्दः स्वक्षरवृद्धिलोपश्च । तत्र गीतेन प्रतिहारं विद्यात्** (प्र.सू.१.२२) इति प्रतिहारसूत्रकारवचनात् **प्रातिहारिकमेव गीतं प्रतिहारो वैच्छन्दसेषु । अप्यपवादौ** (द्रा.श्रौ.२०.३.२४-२५) इति *द्राह्यायण*वचनाच्चेति वाच्यम् । **इन्द्र जुषस्व** (सा.९४६) इत्यस्या अपि अनुष्टुप्त्वेन योनिच्छन्दस्त्वात् । न च योनेर्गायत्रीत्वात् विच्छन्दस्त्वमिति वाच्यम् । **योनौ यान्यभ्यासेनान्यच्छन्दः संपद्यन्ते यथा गौरीवितौदलकौत्स त्रैककुभवैखानसानि** (द्रा.श्रौ.२०.४.२५) इति *द्राह्यायण*वचनेन योनेरप्यनुष्टुप्त्वात् । न च विच्छन्दस्त्वं स्वराडनुष्टुप्त्वादिति वाच्यम् । **न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्** (ऐ.ब्रा.१.६) इति बह्वृचब्राह्मणात् **एकन्यूनाधिका सैव** (ऋ.प्रा.१७.२) इति शौनकवचनाच्च । तस्मात्तयोर्वचनयोरत्र व्यापाराभावात् उत्तमपादोऽष्टाक्षर एवेति चेत् । अत्रोच्यते । उत्तमपादो दशाक्षर एव । **संख्यावृद्धिह्रासौ च** (प्र.सू.१.४) इति प्रतिहारवचनेन सच्छन्दस्यपि तदादावेवाक्षराधिक्यविधानात् । ऊहेऽधीयमान-प्रतिहारोऽपादादावपि घटते । उत्तमपादाक्षराधिक्यगौरीविते तथा संभावात्। वैच्छन्दसगौरीवितवत् । तथाहि - **आजा । गृवाऽ३इः** (ऊ.द.२१४) इत्यत्र **वोरथिराऽ३१२३** इति प्रतिहारः । **परि । ऊषूऽ३ । प्रधन्वावा** (ऊ.स.७७८) इत्यत्र च **ध्यात्रणयाऽ३१२३ः** । इति प्रतिहारः । **किमित्। तेवाऽ३इ** । (ऊ.प्रा.८४०) इत्यत्र **रूपस्समाऽ३१२३इ इति** प्रतिहारः । **किमित् । तेवाऽ३इ** । (ऊ.प्रा.८४०) इत्यत्र **रूपस्समाऽ३१२३इ इति** प्रतिहारः । एवं सच्छन्दस्यापि ऋच उत्तमपादान्ते चतुरक्षरं प्रतिहारः । योनौ

---

4. A Om. °कार°

10. S[1] after °वचनेन ins. एव; S[2] Om. अपि; S[1-2] Om. च

16. S[2] गीयमान°, A विधीयमान° for अधीयमान°

19. A Om. परि । . . . प्रतिहारः (l.13)



तथा दर्शनात् । एवं सत्यर्थादनादित्वं भवति । अत एव प्रतिहार भाष्यकारेण **उत्तमं पदं प्रतिहारस्थानम्** (प्र.सू.१.२) इत्येतावन्मात्रमुक्त्वा **इन्द्रजुषस्व** (सा.९५२) इत्यत्र **चाकानश्चाऽ५३१२३ इति प्रतिहारः** (प्र.सू.४.४१) इत्युक्तम् । यद्वा **विच्छन्दः स्वक्षरवृद्धिलोपश्च** (प्र.सू.१.२२) इत्यत्र योनिविसदृशच्छन्दस्सु सामस्विति तव्द्याख्यातृवरदराजवचनात् । अनुष्टुप्त्वेऽपि अक्षरद्वयाधिक्यमात्रेण योनितुल्यत्वात् वैच्छन्दसगौरीवितवदपादादौ प्रतिहारः । तस्मात् धन्विनोक्तमेव समीचीनमिति भाति । अत्र सामश्रौतिनः प्रष्टव्याः । अष्टाक्षरपादविकारदशाक्षरस्य पादस्य ऋग्वेदे उदाहरणप्रदर्शनं तु बह्वृचेषु मध्ये केचन खण्डिकोपाध्यायाः **वयं तदस्य संभृतम्** (ऋ.८.४०.६) इति पादच्छेदं कृत्वा **वस्विन्द्रेण विभजेमहीति** पादं कुर्वन्ति । तैरप्येवमेव पादच्छेदः कर्तव्य इति बोधनार्थम् । एवं पादच्छेदे पूर्वसूत्रे मदुक्तकर्ममीमांसासूत्रमप्यनुकूलं भवति ॥ ७ ॥

## एकादशाक्षरं आ नवाक्षरतायाः प्रतिक्रामति । यदि वा दधे यदि वा न (ऋ.१०.१२.७) इति ॥ ८ ॥

**तत्त्व०** - इति । गतम् । अत्रोदाहरणमाह - **यदि वा दधे यदि वा नेति । इयं विसृष्टिर्यत आ बभूव** (ऋ.२०.१२९.७) इति त्रिष्टुभो द्वितीयः पाद इति । दशाक्षरस्य पृथिव्यामतिषितं यदूधः (ऋ.१०.७३.१) इति ॥ ८ ॥

**छन्दो०** - एतदृग्वेदे । स्पष्टोऽर्थः । दशाक्षरस्योदाहरणम् - **यज्ञं च नस्तन्वं च प्रजां च** (सा.११०५) । **अरण्योर्निहितो जातवेदाः**

---

7. A योन्यानुकूल्यत्वात् for योनितुल्यत्वात्

9. A दशाक्षरपादस्य for दशाक्षरस्य पादस्य

13. S trans. मधोश्चकानश्चरुर . . . . भवति (vide pp.24, ln. 17) after अनुकूलं भवति

20. A Om. एतदृग्वेदे

(सा.७९) । **तदिदास भुवनेषु ज्येष्ठम्** (सा.१४७७) । नवाक्षरस्य सूत्रकारेणैवोदाहृतम् । **यदि वा दधे यदि वा न** (ऋ.१०.१२८.७) इतीति । एतदृग्वेदे । यजुर्वेदे च **इयं विसृष्टिर्यत आ बभूवे**त्यस्यामृचि । सामवेदे तु **कोना तनात्मना सह्यामात्वोताः** (सा.३१६) । **हरीणां रथ्या निव्रतानाम्** (सा.३३४) । **प्रेद्धो अग्ने दीदिहि** (सा.१३६६) । सूत्रकारेण वेदान्तरे उदाहरणप्रदर्शनं सूत्रान्तरोक्तलक्षणसङ्ग्रहार्थम् । यथाह यजुर्वेदसर्वानुक्रमणीकारः - '**आ नवाक्षरतायाः प्रतिक्रामाति । यदि वादधे यदि वा नेति** इति एकादशाक्षरपादस्य नवाक्षरपर्यन्तमवरोहणात् । **यज्ञं च नस्तन्वं च** (सा.११०५) इत्यस्यां **यत्रैकादशाक्षरौ सा त्रिष्टुप्** (नि.सू.१.४.१२) इत्यनेन द्विपदा त्रिष्टुबिति त्रिष्टुभ् भवति । **अरण्योर्निहितः** (सा.७८) । **तदिदास** (सा.१४७७) । **इयं विसृष्टिः** (ऋ.१०.१२८.७) । **सुष्वाणासः** (सा.३१६) । **यजामह इन्द्रम्** (सा.३३४) इत्येतासामृचां **चतुश्चत्वरिंशदक्षरा त्रिष्टुप् चतुष्पादैकादशाक्षरपादा** (नि.सू.१.४.१) इत्यनेन त्रिष्टुप्छन्दो भवति । **प्रेद्धो अग्ने** (सा.१३६९) इत्यस्मा ऋचः **एकादशाक्षरपादा अपि** (नि.सू.१.४.१५) इत्यादिना विराट्छन्दो भवति । **प्रेद्धो अग्ने** (सा.१३६९) इत्यस्मा ऋचः **प्रेद्धो अग्ने दीदीहि पुर** इति पादो वेति संशये पादव्यवस्थां मराये साम्नि विभाग्यभक्ति निर्णयं **च एकादशाक्षरपादा अपि त्रिपदा विराज इत्येवाचक्षते । यथाग्निं नर** (सा.७२) (नि.सू.१.४.१५) इत्यत्र वक्ष्यामः ॥ ८ ॥

## अष्टाक्षरताया इत्येके इति ॥ ९ ॥

---

2. S Om. एव
4. A Om. तु
9. S अस्याः for अस्यां; A Om. यत्र; A त्रिष्टुभः for त्रिष्टुप्
14. S त्रिष्टुप्त्वं for त्रिष्टुप्छन्दो
15. A Om. प्रेद्धो . . . भवति
17. A अतिसंशये for संशये



**तत्त्व०** - एकादशाक्षरपादः अष्टाक्षरतायाः प्रतिक्रामति । उदाहरणम् - **हव्या जुषस्व मेधिरे** (ऋ.३.२१.४) इति ॥ ९ ॥

**छन्दो० - एके** आचार्याः एकादशाक्षरपादोऽष्टाक्षरपर्यन्तमवरोहतीत्याहुः । अष्टाक्षरस्योदाहरणं यजुर्वेदसर्वानुक्रमणीकारो आह । तद्यथा - अष्टाक्षरतायाः क्वचिद्दृश्यते **न मृत्युरासीदमृतं न तर्हि न** (ऋ.१०.१२९.२) इति ॥ ९ ॥

## आ पञ्चदशाक्षरताया अभिक्रामति ।

3 1 2 3 1 2 3 1 2 3

## सत्रा दधानमप्रतिष्कुतꣳ श्रवाꣳसि इति ॥१०॥

**तत्त्व०** - एकादशाक्षरपाद इत्यनुषङ्गः । अत्रोदाहरणम् - **सत्रा दधानमिति । तमिन्द्रं जोहवीमि** (सा.४३०) इति अस्याः द्वितीयः पादः॥

नन्वियमृक् त्रिष्टुप् भवतु । एकादशाक्षरपादचतुष्टयवत्त्वादिति चेन्न । आचार्यस्य मतेऽष्टाक्षरादिपादत्रयापेक्षयाधिकस्य छन्दःपादस्याभावादभिक्रान्तैरैवपादैश्छन्दोऽभावस्य वक्तव्यतया **तमिन्द्र जोहवामि** (सा.४६) इत्यस्या अतिजगत्यपरपर्यायविधृतिष्वस्य वक्तव्यत्वात् । तथा च *भरतस्वामी* **- प्रवोमहेऽतिजगती तमिन्द्रमिति तादृशी** (भरतस्वामी सा.४५७) इति । **वि सेनाभिर्भयमानो विराधसा** (सा.३३४) इति द्वादशाक्षरस्योदाहरणम् । **रायो नो विश्वा सुपथा कृणोतु वज्री** (सा.४६०) इति त्रयोदशाक्षरस्य । **न काममवतो हिनोति न स्पृशद्रयिम्** (सा.४४१) इति विषमपदायां चतुर्दशाक्षरस्य ॥ १० ॥

**छन्दो०** - एकादशाक्षर इति वर्तते । एकादशाक्षरपादः पञ्चदशाक्षरपादमभिव्याप्य आरोहतीत्यर्थः । द्वादशाक्षरपादस्य **प्रभञ्जन्**

---

4. A after ०कारः adds: यास्कः; S अष्टाक्षरपादस्य for अष्टाक्षरस्य
11. T चतुष्टयत्त्वात् for चतुष्टयवत्त्वात्
12. $S^2$ पादाभावात् for पादस्याभावात्; $S^2$ after क्रान्तैः ins. तैः
19. T पादायां for पदायां

**सेनाः प्रमृणो युधा जयन्** (सा.१८४६) इति । त्रयोदशाक्षरपादस्य **तमिन्द्रं जोहवीमि मघवानमुग्रम्** (सा.४६०) इति । चतुर्दशाक्षरस्य तु मृग्यम् । पञ्चदशाक्षरस्य सूत्रकारेणोदाहृतम् - **सत्रा दधानमप्रतिष्कृतम्** (सा.४६०) इति । एकादशाक्षरपादस्य पञ्चदशाक्षरपर्यन्तमभिक्रमणात् **बृहस्पते परिदीया रथेन** (सा.१८४६) इत्यस्यास्त्रिष्टुप्त्वं भवति । **तमिन्द्रं जोहवीम्** (सा.४६०) इत्यस्या एकादशाक्षरपादचतुष्टयवत्त्वात् । **त्रिपदाप्रभृतीनाम्** (नि.सू.२.३.३) इति वचनात् अवसानद्वयं भवति ॥१०॥

## द्वादशाक्षर आ नवाक्षरतायाः प्रतिक्रामति ।

3 2 3 1 2 3

## अनूपे गोभान् गोभिरक्षा इति ॥ ११ ॥

1 2 3 2

**सोम उषाणः** (सा.९९७) प्रगाथे द्वितीयाया ऋचः प्रथमः पादः । दशैकादशयोरुदाहरणम् - **त्यꣳसुमेषं महया स्वर्विदम्** (सा.३७७) इति । **चर्षणीधृतं मघवानमुक्थ्यम्** (सा.३७४) इति ॥ ११ ॥

छन्दो० - द्वादशाक्षरपादो नवाक्षरपादपर्यन्तमवरोहति । एकादशाक्षरपादस्योदाहरणम् - **प्रियं चेतिष्ठमरतिꣳस्वध्वरम्** (सा.४५)। **उत त्राता शिवो भुवो वरूथ्यः** (सा.४४८) । **एना नवग्वो दध्यङ्ङपोर्णुते** (ऋ.९.१०८.४) । दशाक्षरस्य **त्वं वृत्रेष्विन्द्र सत्पत्तिं नरः** (सा.२३४) । नवाक्षरस्य सूत्रकारेणोदाहृतम् । **अनूपे गोमान्** (सा.९९२) इति । इदमप्युदाहरणम् - **तव श्रवाꣳस्युपमान्युक्थ्य**

1. S °दशाक्षरस्य for °दशाक्षरपादस्य
2. $S^{1-2}$ after उग्रम् ins. इति
4. $S^{1-2}$ आ पञ्चदशाक्षरतायाः for पञ्चदशाक्षरपर्यन्तम्
7. A प्रभृतीति for प्रभृतीनामिति
11. $S^{1-2}$ Om. °पादः ।



(सा.८१४) । द्वादशाक्षरस्य **आ नवाक्षरतायाः** प्रतिक्रमणात् । **एना वो अग्निम्** । (सा.४५) । **त्वामिद्धि** (सा.२३४) इति । अनयोः षट्त्रिंशदक्षरा बृहती चतुष्पदैव । **त्रयोऽष्टाक्षरा उपोत्तमो द्वादशाक्षरः** (नि.सू.१.२) इत्यनेन बृहतीच्छन्दः सिध्यति । **अग्ने त्वं नो अन्तमः** (सा.४४८) इत्यस्या **यत्र [मध्ये] द्वादशाक्षरा[वभितोऽ-]ष्टाक्षरौ सा विष्टारपङ्क्तिः** (नि.सू.१.३) इत्यनेन द्विपदा विष्टारपङ्क्तिच्छन्दो भवति । **एना नवग्वः** (ऋ.९.१०८.४) । **अनूपे गोमान्** (सा.९९२) । **मत्स्वा सुशिप्रिन्** (सा.८०८) इत्येतासामृचाम् **अथापि चतुष्पदा भवति द्वादशाक्षरोऽष्टाक्षर इति** व्यत्यासः । **तां सिद्धाविष्टारपङ्क्तिः** (नि.सू.१.३.२) इत्यनेन सिद्धाविष्टारपङ्क्तिर्भवति । **तस्मात् त्वं ह्यग्ने दैव्यम्** (सा.५८३) **एना नवग्वः** (ऋ.९.१०८.४) इति ऋग्द्वयस्य च **सोम उष्वा** (सा.९९७) **अनूपे गोमान्** (सा.९९१) इति ऋग्द्वयस्य च **त्वामिदा** (सा.३०२) **मत्स्वा** (सा.८०८) इति ऋग्द्वयस्य च । **तद्यत्र सिद्धाविष्टारपङ्क्तिर्बृहत्या वा ककुभा वोत्तरा भवति तां प्रगाथ इत्याचक्षत इति** (नि.सू.१.३.१०) अनेन प्रगाथत्वं सिद्धं भवति । नवाक्षरपादस्य **अनूपे गोमानिति** स्वेनैवोदाहृतं तु । **अनूपे गोमानित्यस्या** बृहतीछन्दो बह्वृचानाम् । तदुक्तं तत्सर्वानुक्रमण्याम् - **अष्टम्याद्ये बृहत्यौ** (२.५३.१०७) इति । न तु छन्दोगानामिति सूचयितुम् ॥ ११ ॥

## आष्टाक्षरताया इत्येके ॥ १२ ॥

तत्त्व० - द्वादशाक्षरपाद **आष्टाक्षरतायाः** प्रतिक्रामति ।

उदाहरणम् -

**अग्निनेन्द्रेण वरुणेन विष्णुनादित्यै रुद्रैर्वसुभिः सचा भुवा ।**
**सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना ॥** (ऋ.८.३५.१)
इति अत्र चतुर्थः पादः ॥ १२ ॥

1. A °क्षरपादस्य for °क्षरस्य
18. A निश्चितम् for सूचयितुम्

छन्दो॰ - द्वादशाक्षर इति वर्तते। स्पष्टोऽर्थः। **नकिष्टं कर्मणा नशत्** (सा.२४३)। अस्य द्वादशाक्षरपादत्वात् **अष्टाचत्वारिंशदक्षरा जगती चतुष्पदा द्वादशाक्षरपादैव** (नि.सू.१.४.४) इति वैखानससाम्नो जगतीछन्दो भवति। बृहतीपाठस्तु सामान्तरापेक्षः ऋग्वेदापेक्षो वा। नन्वस्य द्वादशाक्षरपादान्तर्भावे प्रमाणाभावात् बृहत्यां पाठाच्च उद्वंशीयानुष्टुब्वत् बृहत्येव भवत्विति चेत्। यदत्र वक्तव्यं तत् सर्वं **चतुष्टयेन छन्दो जिज्ञासेन** (नि.सू.१.६.२०) इत्यत्र वक्ष्यामः॥ १२॥

**आ षोडशाक्षरताया अभिक्रामति विकर्षेण**

2 3 1 2 3 2 3 2 3

**तुवँ वृत्राणि हꣳस्य प्रतीन्येक इत्पुरु** (सा.२४८) इति ॥१३॥

तत्त्व॰- द्वादशाक्षरपाद इति शेषः। उदाहरति - **विकर्षेण तुवं वृत्राणि हꣳस्यप्रतीन्यक इत्पुरु** इतीति। नन्वेतत्पादस्य त्रयोदशाक्षरत्वात् कथमुदाहरणत्वम्। अत आह - **विकर्षेणेति**। मकारवकारसंयोगविभागौ विकर्षः। तेन सह पठितत्वादिदं दर्शयति - **तुवं वृत्राणि** इत्यादि। एतेन **द्वैधं कुर्यादसम्पूर्णे** (नि.सू.१.७.१५) इति वक्ष्यमाणसूत्रेण पादपूरणाय विकर्षः क्रियते। तत्रापि यकारात् पूर्वमिकारः वकारात् पूर्वमुकारश्च प्रश्लेष्टव्यौ इति गम्यते। त्रयोदशाक्षराद्युदाहरणम् - **अभि वो वीरमश्रसो मदेषु गाय** (सा.२६५) इति।
**सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे** (सा.३७०) इति।
**साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः** (सा.१४८१) इति ॥१३॥

4. S after वा ins. इति
6. $S^2$ वक्ष्यति for भवत्विति
13. $S^2$ उदाहरणम् for उदाहरणत्वम्
14. A संयोगविभागौ for संयोगो विभागो
17. T प्रश्लेष्टव्यः for प्रश्लेष्टव्यौ



छन्दो॰ - **आषोडशा. . .** (क्षरपाद) इतीति। द्वादशाक्षर इति वर्तते। द्वादशाक्षरपादः षोडशाक्षरपर्यन्तमारोहति। त्रयोदशाक्षरस्योदाहरणम् - **अभी वो वीरमन्धसो मदेषु गाय** (सा.२६५)। इति।

चतुर्दशाक्षरस्य -

**सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे** (सा.३७०)।

पञ्चदशाक्षरस्य तु मृग्यम्। षोडशाक्षरस्य वैखानससाम्नि **इन्द्रं न यज्ञैर्विश्वमूर्तमृभ्वसमधृष्टम्** (सा.२४३)।

सूत्रकारेणोक्तं तुवं वृत्राणीत्यपि। एवं सति **अभि वो वीरम्** (सा.२६२) इत्यस्या **यत्र प्रथमो द्वादशाक्षरः सा पुरस्तात् बृहती** (नि.सू.१.२.१६) इति पुरस्ताद्बृहती छन्दो भवति। **विश्वाः पृतना** (सा.२७०) इति। **अष्टाचत्वारिंशदक्षरा जगती चतुष्पदा द्वादशाक्षरपादा** (वि.सू.१.४.४) इत्यनेन **या एकेन ज्यायस्यस्ता भुरिज** (नि.सू.२.१२.१) इत्यनेन च भुरिक्जगतीछन्दो भवति॥

**ननु विश्वाः पृतनाः अभिभूतरं नर** (सा.३७०) इत्यतिजगतीवर्षीयच्छन्द आक्रमत इत्यतिजगतीच्छन्दो ब्राह्मणे श्रूयत इति चेत्। यदत्र वक्तव्यं तद् भूरिक्जगत्युदाहरणसमये वक्ष्यामः।

**नकिष्टं कर्मणा नशत्** (सा.२४३) इति वैखानससाम्नः पूर्वोक्तजगतीलक्षणेन जगतीछन्दो भवति। **त्वमिन्द्र यशा असि** (सा.२४८) इत्यस्याः **षट्त्रिंशदक्षरा बृहती** (नि.सू.२.१६) इत्यनेन बृहतीछन्दो भवति। **विकर्षेण तुवं वृत्राणि** (नि.सू.१.१.१३)

2. S अनुवर्तते for वर्तते
9. S °कारोक्तं for °कारेणोक्तं
12. A trans. अष्टाचत्वारिंशदक्षरा . . . विकृष्टोऽपि विहितः (See p.30, pp.35 ln.12) after संकृष्टविधानात् (See pp.37, ln.17)
16. $S^{1-2}$ Om. अतिजगती

इत्यस्यायमर्थः । ऋगध्ययने **त्वं वृत्राणि** (ऋ.८.९०.५) इत्ययं पादः । **त्वं स्म न्ये** इत्येतत्संयोगत्रयत्वेनाधीतोऽपि संयुक्ताक्षरविभागेन षोडशाक्षर इति कथं विकर्ष इत्याकाङ्क्षायां विकृष्य पठित्वा दर्शयति **तुवं वृत्राणि हंसियप्रतीनियेक इति पुर्वितीति** । ननु अस्य यथाश्रुतत्रयोदशाक्षरपादस्यैव द्वादशाक्षरपादान्तर्भावेन बृहतीछन्दस उपपत्तिर्विकर्षेण द्वादशाक्षरपादान्तर्भूतषोडशाक्षरसंपादनं किमर्थमिति चेत्। उच्यते। **एतानि संधिना तानि** (नि.२.३.१९) इत्यादि वक्ष्यमाणसूत्रेण यत्र यत्र विकर्षो विधास्यते तत्र तत्र क्षिप्रविकर्षे विकृष्टयोरचोर्मध्ये इकारात् परं यकारो भवति, उकारात् परं वकारो भवतीति नित्यविकर्षे तु विकृष्टयोर्हलोर्मध्ये यकारात् पूर्वमिकारो भवति वकारात्पूर्वमुकारो भवतीति ज्ञापनार्थं तथैव पठित्वा दर्शितवान् । यद्वा यः संयोगो यवान्तः क्वचित् संकृष्टः क्वचित् विकृष्टः तत्र संकृष्टग्रहणम् । **न्यर्यः साहीय** (पु.सू.६.११.२) इत्यादिपुष्पसूत्रादिभिर्यत्रार्थाद्वा साक्षाद्वा विकर्षो विहितस्तत्र क्षिप्रनित्ययोर्विकर्षे कर्तव्ये एवं यकारवकारेकारोकारा भवन्तीति ज्ञापनार्थम् ।

ननु तत्रापि **अवृद्धादिपदान्तात् स्वरे परे यकारो व्यवधीयते** (पु.सू.७.९.१) इत्यादिना फूल्लेनैव यकारवकारयोर्विधानात् न ज्ञापनार्थमिति चेत् । अत्रोच्यते । नित्यविकर्षार्थं ज्ञापकमेव । तत्र पुष्पेण इकारोकारयोर्विधानाभावात् । तत्र अर्थात् पुष्पेण विहितविकर्ष-विधिरस्तूच्यते । **न्यर्यः** (सा.६७४) **साहीय** (पु.सू.६.११.२) इत्यादिना

5. A Om. द्वादशाक्षर°
8. $S^{1-2}$ Om. यत्र विकर्षो; $S^{1-2}$ Om. One तत्र
10. $S^{1}$ विकर्षयोः for विकृष्टयोः
12. $S^{1}$ संकर्षः for संकृष्टः
14. A विकर्षेण for विकर्षे कर्तव्ये एव
16. $S^{2}$ O m. ननु
18. S ज्ञापकम् for ज्ञापनार्थम्; $S^{1}$ after फुल्लेन ins. एव



यत्र संकृष्टो विहितस्तदन्यत्र अर्थात् विकृष्टोऽपि विहितः । उदाहरणानि तु पुष्पभाष्ये द्रष्टव्यानि । तत्रानुक्तान्युदाहरणानि कानिचित् ब्रूमः । तथा हि **ऊहगाने योनिवत्स्वराः स्तोभाभ्यासविरामाश्च** (पु.सू.८.५.१) इति पुष्पेण ऊहगाने योनिवत् क्रुष्टादिसप्तस्वरा विहिताः । ते च स्वराः अक्षरपूर्णे पर्वणि झटिति प्रवर्तन्ते। ऊनाक्षरे पर्वणि अक्षरविकर्षसंभवे अर्थात् अक्षरविकर्षं संपाद्य प्रवर्तन्ते । उदाहरणानि तु अपीच्यगुह्यशब्दयोः आपा इचीयाम् । गुहियम् । इत्यादीनि द्रष्टव्यानि । **प्रेष्ठं वः** (सा.१२२७-ऊ.द.१७१) इत्यौशनस्य **सोमसामगायत्रीक्रौञ्चवैरूपौदल-गायत्र्यौशन** (सू.१०.११.७) इत्यादिना चतुरक्षरप्रस्तावो विहितः । सोऽपि ऊनाक्षरे पर्वणि अक्षरविकर्षसंभवे अक्षरविकर्षं संपाद्य प्रवर्तते । **तुवं यावाइ** (ऊ.द.१७१) इत्याद्यायां स्तोत्रीयायां विकर्षयोग्यसंयुक्ताक्षराभावात् **प्रेष्ठं वः** (सा.१२२७/ऊ.द.१७१) इति त्र्यक्षर एव प्रस्तावः । ननु अत्रापि द्वितीयपर्वाद्यक्षरोऽतिथिमित्यकारेण सह चतुरक्षरप्रस्तावः कर्तव्यः ।

उत्तरवारवन्तीये प्रतिहारे **सम्राजन्ताम्** (सा.१६२८/ऊ.ए.४९१) इतिवत् चेत् । न । **भक्त्यन्तः पदगीतः सर्वत्र** (पु.सू. ६.२.१.) इति पुष्पानुसारेण **छ्वंवा** इति पदगानाध्ययनात् । **शने प्रेष्ठं वाजुहोताम्** (पु.सू. ८.७.१) इत्याजुहोता स्वरविधानाच्च । **सोमसाम** (प्र. सू. ८.१२) द्वितीयम् इत्यादिवचनेन उत्तरवारवन्तीयस्यापि चतुरक्षरप्रस्तावो विहितः । तेन **तुवन्नश्चा औहोहाइ** (ऊ.ए. ४८०) इति विकर्षः । रथन्तरबृहत्साम्नोः **पद्योऽनादेशे** (पु.सू.१०.१०.७) इति पुष्पवचनात् पादप्रस्तावे

1. A Om. अपि; A trans. अष्टाचत्वारिंशदक्षरा . . . विहितः (See p.33, ln.12) after संकृष्टविधानात् (See pp.37 ln.17); A भाष्यादौ for भाष्ये
6. A तद्यथा for उदाहरणानि तु; $S^{1-2}$ after तु ins. आमहीयवे मरुद्भियाः
10. S Om. पर्वणि अक्षरविकर्षसंभवे अक्षर° (l.16)
13. $S^{1-2}$ अनेनैव for नन्वत्रापि
18. $S^{1-2}$ विधिष्ठा वा इति निर्देशात् for विधानात्
19. $S^{1-2}$ Om. द्वितीयम् . . . इत्यादि

त्वामित्त्वां **काष्ठासु प्रतिहारे बृहति** (पु. सू. ७.२.३८) इति त्वां शब्दः संकृष्टः। ननु **अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति** (तां.ब्रा.१५.१०.८) इति ब्राह्मणात् कथं पादप्रस्ताव इति चेत्। ब्राह्मणज्ञेनैव पुष्पकारेण पादप्रस्तावविधानात् श्रुतेस्तत्रैव तात्पर्यम्। बृहत्साम्नि तु **चतुरक्षरेण बृहतः प्रतिहरति** (तां. ब्रा.७.७.४) इति ब्राह्मणम्। तदनुसृत्यैव **बृहत्त्वामित्** (प्र.सू. ११.९) इति प्रतिहारसूत्रकारोऽपि चतुरक्षरमेव विधत्ते। **सामपूर्वग्रहणेन न्याय्यमग्राम्येषु** (प्र.सू.२.११) इति वचनात्। ननु तत्र चतुरक्षरसंपादनार्थं **त्वां काष्ठाऽ३४औहोवा** (र.ए.७६) इत्यत्र त्वांशब्दस्य विकर्षः कर्तव्य इति चेत्। न। **त्वां काष्ठासु प्रतिहारे बृहति** (पु.सू.७.२.३८) इति संकृष्टविधानात्। तर्हि- ब्राह्मणविरोध इति चेत्। ब्राह्मणज्ञेनैव संकृष्टविधानात् किं कुर्मः।

रथन्तरसाम्नि तु **स्वर्दृशं प्रतीक्षेत** (तां. ब्रा. ७.७.१२) इति, ब्राह्मणेन स्वदृशमिति प्रत्यक्षपाठात् तत्र भकारराहित्ये वीक्षणं च विहितम्। तदनुसृत्य प्राक् प्रतिहारात् **चतुरक्षरं शिष्ट्वा** (द्रा.श्रौ. ६.१.१६) इति प्रतिहारात् प्राक् चतुरक्षरे भकारराहित्यविधौ द्राह्यायणवचनात् अर्थात् **सुवर्दृशमिति** विकर्षो भवति। तत्रैव ब्राह्मणे भकारराहित्यविधानात्। अत एव त्र्यक्षरस्य विकर्षेण चतुरक्षरत्वं संपाद्य **सुवार्दृशामित्य**ध्ययनं ज्ञापयति। **अभित्वा शू.** (र.द.१) रथन्तरे द्वादशाक्षरपादानामक्षर-संख्यातोऽपि द्वादशाक्षरत्वं संपादनीयमिति तेन द्वितीयायां स्त्रोत्रीयायां

---

13. $S^{1-2}$ ब्राह्मणं for ब्राह्मणेन; $S^{1-2}$ Om. प्रत्यक्षपाठात्; $S^{1-2}$ अत्र for तत्र; $S^{1-2}$ विदधत् ब्राह्मणवीक्षणं विधत्ते for वीक्षणं च विहितम्
15. $S^{1-2}$ भकारविधौ वचनात् for भकारराहित्यविधौ द्राह्यायणवचनात्
16. $S^{1-2}$ Om. भवति। तत्रैव ब्राह्मणे
17. $S^{1-2}$ अत्र for अत एव; A चतुरक्षरत्वसंपादनं for चतुरक्षरत्वं संपाद्य; A Om. सुवार्दृशामित्यध्ययनं
18. $S^{1-2}$ before अभि त्वा add : ककुबुत्तरबृहती
19. $S^{1-2}$ before द्वादशाक्षरत्वं add : पराचि रथन्तरे च; $S^{1-2}$ Om. सम्पादनीयम्



दिव्यो इत्यत्र दिवियो इति विकर्षः कर्तव्यः। **नत्वावामन्यो** इत्यत्र त्वांशब्दः संकृष्टः। दिव्योशब्दः द्वादशाक्षरसंपादनार्थं विकृष्य **नामिन्द्रसुस्थुषो न्त्वावमन्योनिवियो** इति सर्वैरधीयते। तेन **ओं वाक् भाभि भभुभुभोभभाभाभभभोभिभो** इति चतुर्दशभकाराः प्रयुज्यन्ते॥

ननु बृहत्साम्नि च **चतुरक्षरेण बृहतः प्रतिहरति** (तां.,ब्रा. ७.७.५) इति ब्राह्मणम्। तदनुसृत्यैव **बृहत्त्वामित्** (प्र.सू.११.९) इति प्रतिहारसूत्रकारोऽपि चतुरक्षरमेव विधत्ते। **सामपूर्वग्रहणेन न्याय्यमग्राम्येषु** (प्र.सू. २.११) इति वचनात्। किंच तत्रैव **बृहतीत्यष्टाक्षरेण प्रस्तौति** (तु.तां.ब्रा.१५.१०.९) इति ब्राह्मणम्। तदनुसृत्य **पद्योऽनादेश** (पु. सू. १०.१०.७) इति पादप्रस्तावोऽपि विहितः। तस्मात् **औहोइत्वामिद्धिहवामहा३ए त्वां काष्ठाऽ३५१ औहोवा।** (र. ए. ७६) इत्यत्रापि अष्टाक्षरप्रस्तावचतुरक्षरप्रतिहारसंपादनार्थ-मक्षरविकर्षः कर्तव्य इति चेत्। उच्यते। विकर्षो न कर्तव्यः। **त्वामित्त्वां काष्ठासु प्रतिहारे बृहति** (पु.सू.१०.७.२) इति पुष्पेण त्वामिच्छब्दस्य प्रस्तावे **त्वां काष्ठा**शब्दस्य प्रतिहारे च संकृष्टविधानात्। तर्हि ब्राह्मणादिविरोधः स्यादिति चेत्। किं कुर्मः। एतद्ब्राह्मणज्ञेनैव पुष्पकारेण संकृष्टविधानात्। **पद्योऽनादेश** (पु.सू.१०.१०.७) इति

---

1. $S^{1-2}$ Om. दिव्यो . . . संकृष्टः
8. $S^{1-2}$ Om. तत्रैव
9. $S^{1-2}$ Om. इति; $S^{1-2}$ प्रस्तौति add : प्रथमायाः ऋचः; $S^{1-2}$ ब्राह्मणेन for ब्राह्मणम्
10. $S^{1-2}$ Om. तदनुसृत्य पद्योऽनादेश इति; $S^{1-2}$ अष्टाक्षर° for पाद° and Om. अपि
11. A Om. तस्मात्; $S^{1-2}$ trans. औहाइत्वामिद्धि . . . हा३ए after त्वांकाष्ठा . . . औहोवा; $S^{1-2}$ चतुरक्षरप्रतिहाराष्टाक्षरप्रस्ताव° for अष्टाक्षर . . . °हार°
13. A Om. विकर्षो न कर्तव्यः
15. $S^{1-2}$ Om. च; A after °विधानात् ins. संकृष्टावेव
16. A after चेत् ins. न; A trans. किं कुर्मः। after संकृष्टविधानात्
17. A trans. अष्टाचत्वारिंशदक्षरा . . . विहितः। (See also p.35 ln.1) after संकृष्टविधानात्। A Om. पद्योऽनादेशे . . . शास्त्रान्तरमूलमिति द्रष्टव्यम् (See also pp.39, ln.14)

पादप्रस्तावविधानाच्च । अस्याष्टाक्षरपादविकारसप्ताक्षरपादत्वाच्च । केचित्तु कल्पसूत्राधिकारन्यायेन सूत्रब्राह्मणयोर्विरोधे सूत्रस्यापि श्रुतिमूलतया श्रुत्योरेव विरोधः । तथाच तुल्यबलविरोधे विकल्पस्यावश्यकत्वात् । नित्यब्रह्मयज्ञाध्ययने [श्रुति] मूलकसूत्रानुसरणम्। **मखप्रयोगे पाञ्चभक्तिचतुरक्षरेण बृहतः परिहरति** (तु. तां. ब्रा. ७.७.४) । **अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति** (तां. ब्रा. १५.१०.८) इति श्रुत्या विकर्ष इत्याहुः । अन्ये तु औदुम्बरीवेष्टनन्यायेन श्रुतिविरुद्धसूत्रार्थस्यानुष्ठानं तन्मूलश्रुतिदर्शनपर्यन्तम् । अत एव ***द्राह्यायणो***क्तभकारस्याननुष्ठानमित्याहुः । **उप-दवि-पवेति** बहिष्पवमानादौ गायत्रेषु **आद्यपात् प्रस्ताव ओंकारान्तः** (आ.ब्रा. १.१.१६) **इत्यार्षेयब्राह्मणम्** । तदनुसृत्यैव **गायत्रस्य पादेन प्रस्तावः सर्वत्र** (द्रा. श्रौ. २१.१.१०) इति ***द्राह्यायणः*** । **पद्योऽनादेश** (पु.सू.१०.१०.७) इति पुष्पकारश्च । तस्मात् तत्र पादप्रस्तावे कर्तव्ये कुत्राप्यक्षरविकर्षो न भवति । उदाहरणं तु - **दविद्युतत्यारुचोम्** (सा. ६२४) इति आज्ये । **सनः पृथुश्रवायोम्** (सा. ६५६) । **एनाविश्वान्यर्य्योम्** (सा. ८०९) इत्यार्भवे । एवं सर्वत्र पादप्रस्तावे कर्तव्ये विकर्षाभावप्राप्तौ माध्यंदिने पवमाने **एना विश्वानि अर्य ओम्** (सा. ६६८) इति विकर्ष एव भवति। अत्र **द्व्यन्तस्थपरे तु लोपः** (पु.सू. ७.२५.९) इति यलेपः । अत्र कथं विकर्ष इति चेत् उच्यते। **विश्वान्यर्य आपर्णौटतबोधीयऋषभेषु** (पु.सू.७.१०.२०) इति सौपर्णादिषु संकृष्टविधानात् अत्र विकर्षः । यदा **अष्टाक्षरेणेति धानञ्जय्यः** (द्रा. श्रौ. २१.१.३१) इति वचनेन ***धानञ्जय्य***मतानुसारेण तदा ऊना- (क्षरपादे) अक्षरविकर्षेणाष्टाक्षरसम्पादनं कर्तव्यम्। तेन ***धानञ्जय्य***मते **दविद्युततिया रुचोमिति पृथुश्रवायियोमिति** विकर्षः । ननु अत्रापि

2. vide जै.मी.सू. 1.3.11-14

9. S² ष्ठानात् for ष्ठानं and ins. thereafter : संकृष्टश्रुतिमूलकसूत्रानुसरणम् । मखप्रयोगे पाञ्चभक्तिकत्वावश्यंभावात्



विकर्षमन्तरेणाष्टाक्षरसम्पादनार्थं द्वितीयपादाद्यक्षरेण सह प्रस्तावः कर्तव्य इति चेत् न । योनौ **तत्सवितुरिति** गायत्रे पादेनैव प्रस्तावदर्शनात् कृत्स्नद्वितीयपाद एव प्रथमायामावृत्तिगानात् ब्राह्मणेऽपि **तत्सवितुर्वरेण्योम्** । गायत्रमाकारपर्यन्तं गानमिति प्रथमपादेनैव प्रस्तावदर्शनाच्च । **गायत्रमष्टाक्षरेण प्रस्ताव** (तु.द्रा.श्रौ. २१.१.२१) इति ***धानञ्जय्य***मतात् । **तत्सवितुर्वरिणियोमिति** विकर्ष एव । **यः संयोग** इति संकृष्टप्रकरणे अग्रहणात् विकृष्ट एवेति सिद्धान्तः ॥

ननु **उपास्मै गायतानरो३म् इति धानञ्जय्यः** (द्रा. श्रौ. २१.१.३४) इति वचनात् प्रणवान्तप्रस्तावोऽपि तन्मत एव भवति । तस्मादाद्यपादप्रस्तावस्तदात्वेन प्रणवान्तप्रस्तावः कर्तव्यः । **उपास्मै गायता नरोऽ३** इति ***शाण्डिल्यः*** । **उपास्मै गायता नरा३इत्येके** इति वचनादिति चेत् । उच्यते । ऊनाक्षरपादस्थलेऽपि पादप्रस्तावः प्रणवान्त एव भवति । **आद्यपात् प्रस्तावः ओङ्कारान्तः (आ.ब्रा.१.१.१६)** इति श्रुतेः ***धानञ्जय्य***मतं तु शाखान्तरमूलमिति द्रष्टव्यम् ॥

**ज्योतिर्गाने ह्य रुयोज्योति ज्योतिस्सूर्योम्** इत्यत्र गायत्रे प्रथमायामावृति तुर्यो **ज्योतिर्ज्योतिस्सूर्याःप्रे** । इत्यत्र र्य शब्दस्य विकर्षो न भवति । अर्थाद्वा साक्षाद्वा विकर्षविध्यभावात् । एवं चयनक्रतौ चयनोपस्थाने **अग्न आयूंषि** (सा. १४४८) इति **प्रत्यङ्मुखस्तिष्ठन् शिरसि गायत्रं गायेन्निरुक्तम्** (द्रा.श्रौ २.१.१४) इति विहितनिरुक्तगाने **अग्ने पवस्व स्वपोम्** (सा. १५१४) इत्यत्र **आस्मे वर्चस्सुवाइर्याप्रे** इत्यत्र र्यशब्दस्य विकर्षो न भवति । अर्थाद्वा साक्षाद्वा विकर्षविध्यभावात्

6. S² विकृष्टः for विकर्षः

7. S² अविकृष्टः for विकृष्टः; S¹·² after सिद्धान्तः ins. पेत्ताशास्त्रिणा व्योमिति यदुक्तं तदज्ञानविजृम्भितम्

14. A Om. पद्योऽनादेशे . . शाखान्तरमूलमिति द्रष्टव्यम् (See also p.37 ln.17)

17. A संकर्ष for °विकर्ष°

प्रथमायामावृति अक्षराणां संख्यानियमाभावाच्च । अत एव आवापोऽप्यत्रैव विधीयते। **ज्यायसि छन्दसि प्रथमायामावृत्त्या वपेत्। उत्तमं पादं शिष्ट्वा** (द्रा.श्रै. २९.२.९०) इति वचनात् । अत एव **बृहस्पते परिदीया रथेनोम्** (सा. १८४६) इत्यत्र **राक्षाहामित्रा अपबाधमाना प्रभञ्जन्त्सेनाः प्रमृणो युधाजयाद्रेन्** इति गीयते ।

ननु **अग्न आयूँषि** (सा.६२७) इत्यत्र चयनोपस्थाने निरुक्तगानस्य विधानात् तत्र र्यशब्दस्य विकर्षाभावप्रतिपादनं युक्तम् । ज्योतिर्गाने तु सूर्य इत्यत्र र्यशब्दस्य विकर्षाभावप्रतिपादनं किञ्चित्करम् । तत्र निरुक्तगानविध्यभावात् । तथा हि *धन्वि*ना **एतेषु पादेषु त्रिस्त्रिरेकैकमभ्यासं मनसा गायत्रं गायेत्**। (द्रा.श्रौ.२.४.२१) इत्यस्य गायत्रमनिरुक्तं गायेत् इति व्याख्यातम् । तत्र प्रमाणं **गेयम्** (तां.ब्रा.७.१.८) इति ब्राह्मणम् । तेनैव गाने एतस्यां पङ्क्तौ **त्रिर्गायत्रं गायेत् गायत्रमनिरुक्तं गायेदिति** व्याख्याय **अनि** (तां.ब्रा. ७.१.८) इति सामान्यश्रुतेः **अग्न आयूंषि** (सा. ६२७) इति **प्रत्यङ्मुखस्तिष्ठन् शिरसि गायत्रं गायेन्निरुक्तम्** (द्रा.श्रौ. २.१.१४) इतिवत् अत्रापवादाभावादि युक्तम् । अनिरुक्तगानं नाम केवलं प्रणवेनैव गानम् । निरुक्तगानं तु आर्चिकगानमित्यपि *धन्वि*ना व्याख्यातम् । तथैव गायत्रपटले **शेषमुद्गाता मनसा तु स्वभक्तिमोङ्कारं तथा स्वरं वाचा** (द्रा.श्रौ. २१.१.३७-३८) इति *द्राह्यायणः* । तस्मात् ज्योतिर्गाने र्यशब्दस्य विकर्षाभावप्रतिपादनम् अकिञ्चित्करमिति चेत् । अत्रोच्यते । आर्चिकगानमेव कर्तव्यम् **अग्निर्ज्योतिर्ज्योतिरग्नोम्** इत्यादिना

1. A आवृत्ति for आवृति; S[1-2] यथा for अत एव
7. A विकर्षो न भवति for विकर्षाभावप्रतिपादनं युक्तम्
9. A च for हि
16. A Om. नाम केवलं; A Om. एव; S[1-2] after गानम् । add :- तथैव गायत्रपटले सूत्रकारो वक्ष्यति च । अग्न आयूंषीत्यत्र निरुक्तगानं तु आर्चिकगानमित्यपि धन्विना व्याख्यातम्
21. A trans. आर्चिक . . . कर्तव्यम् after पठितत्वात्



आर्चिकगानस्यैव कल्पभाष्यकारादिभिः पठितत्वात् । ननु *धन्वि*नो तु अनिरुक्तगानं कर्तव्यमित्युक्तत्वात् कथमेवमिति चेत् । यदत्र युक्तं तत् सामश्रौतिनः प्रष्टव्याः । ननु गायत्रविषये अनिरुक्तगानं प्रणवगानमिति व्याख्यातम् । तदयुक्तम् । **शेषमुद्गाता मनसा तु स्वभक्तिमोङ्कारं तथा स्वरं वाचा** (द्रा.श्रौ. २१.१.३७-३८) इति केवलौकारस्यैव विधानादिति चेत् । उच्यते । प्रणवो द्विविधः । केवल ओकारो मकारान्त ओङ्कारश्चेति। तदुक्तं भगवता *पतञ्जलि*ना **प्रणवष्टेरि**त्यत्र महाभाष्ये **क एष प्रणवो नाम । पादस्य वा अर्द्धर्चस्य वा अन्त्यमक्षरमुपसङ्गृह्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोङ्कारमोङ्कारं वा विदधाति । तं प्रणव इत्याचक्षते** (८.२.२. ८९) इत्युक्तम् । तस्मात् केवलौकार एव *धन्वि*नो विवक्षितः । अत एव सर्वत्र बहिष्पवमानादौ **गायत्रे उपास्मै गायता न रोम् । ओं कामोप्रे** इत्येव सर्वे गायन्ति । ननु ***पतञ्जलिना*** त्रिमात्र ओङ्कारः प्रणव इत्युक्तम् । *धन्वि*नोऽपि स एव विवक्षित इत्युक्तम् । तदिह न सङ्गच्छते । **त्र्यावृद्गेयम्** (तां.ब्रा.७.१.१) इति हि ब्राह्मणे गायत्रस्य लक्षणमुक्तम् । तत्र प्रथमायामावृति प्रेङ्खस्वरभाज ओङ्कारस्य द्वादशमात्रत्वात् । धूर्गाने तु

1. A चेह for एव; A प्रतिपादनात् for पठितत्वात्; A Om. ननु
2. A after उक्तत्वात् adds : धन्विविरोधात्
3. A श्रौतिकाः for श्रौतिनः; S[1-2] after प्रष्टव्याः add :- यद्वा । धन्विवरदराजयोरुभयोरपि संमततरत्वाविशेषात् विकल्पः । अथवा वरदराजतालवृन्तनिवास्यादीनां धन्व्यपेक्षया बहुत्वात् बहूनामनुग्रहो न्याय्य इति निरुक्तगानमेव । विश्वरूपागानेऽपि यजमानस्य उपस्वरणं निरुक्तमेव तत् गानमपि तत्तत्पुस्तकलेखनेन संकृष्टविकृष्टवत् तथा आइभाववत्तया (S[1] तयाइ। भाववत्तया) च; A Om. ननु; S[2] निरुक्तगानं for अनिरुक्तगानं
4. S[1-2] before व्याख्यातं ins. खलु
6. S[1-2] after ओंकारः add : प्रणवः
10. A तात्पर्यम् for विवक्षितः
12. त्रिमात्रस्य ओंकारस्य प्रणवत्वम् for ओंकारः प्रणव इति
13. A धन्विनस्तत्रैव तात्पर्यम् for धन्विनोऽपि . . . . इत्युक्तम्
14. A Om. हि; S[1-2] trans. गायत्रस्य before त्र्यावृत्; S[1-2] श्रूयते for उक्तम्
15. A आवृत्ति for आवृति

एकोनचत्वारिंशन्मात्रत्वात् । तथा हि प्रेङ्खगानभाजो वृद्धस्याक्षरस्य प्रथमद्वितीयाक्षरौ भवतः । तत्राङ्गुष्ठाग्रस्य प्रथमस्वरे एव कनिष्ठिकामध्यमपर्वोपरि आकाशपर्यन्तं भ्रमणं कृत्वा पुनस्तथैवागत्य द्वितीयस्वरेऽवस्थानम् । तत्र प्रथमद्वितीयस्वरयोः षणमात्राः । आकाशभ्रमणागमनयोश्च षणमात्राः । आहत्य द्वादशमात्रा भवन्ति । कुतः एतदुच्यते । **क्रौध्यमपा षष्ठं नवमात्रम्** (पु.सू. ९.१.७) इति फुल्लेन गायत्री क्रौञ्चमध्यमपादषष्ठाक्षरमेकमात्रं वा नवमात्रं वेति विकल्पो विहितः । अत एव **इन्द्रायेन्दा औहो** (ऊ.द.५००) इत्यत्र द्वितीयपादाभ्यासेन मधुमत्तम इत्यत्र मकारं नवमात्रमूहे सर्वे अधीयते । तत्र ***वरदराजेन*** **नवमात्रो मकारः स्वरत्रययोगादित्युक्त्वा- अनेकस्वरस्य वृद्धस्याक्षरस्य एकैकस्मिन्नेव स्वरे तिस्रो मात्रा** (सू.४.३८) इत्युक्तम् । इह तु द्वादशमात्रत्वात् कथं प्रणवत्वमिति चेदुच्यते । सहस्रे शतं संभवतीतिवत् त्रिमात्रमप्यस्तीति न विरोधः ।

ननु **ओमित्येतदक्षरमुद्गीथमुपासीत** (छां.उ. १.१.१) **ओमित्येतदक्षरमुद्गीथः** (छां.उ.१.१.५) इति चोपनिषदि ओमिति ह्युद्गानश्रवणात् प्रणवगाने मकारान्तप्रणव एव तात्पर्यमित्येवाङ्गी-कर्तव्यमिति चेत् । न । तस्य **प्रस्तुतं वै सामावसीदति तदुद्गातोङ्कारेणोत्तभ्नातीति ब्राह्मणं भवति** (द्रा.श्रौ. १८.३.१) इति विहितम् । ननु ओकारस्यैव लोकवेदयोः प्रसिद्धत्वात् **ओंकारं तथा स्वरे वाचा** (द्रा.श्रौ. २१.१.३८) इति मकारान्तस्यैव *धन्विनः* पाठ इति चेत् । सूत्रपाठं सामगाः प्रष्टव्याः । यदि मकारान्तपाठस्तदा ओमित्येव गातव्यम् ।

1. A प्रेङ्खस्वरस्तु for प्रेङ्खगानभाजः; A Om. वृद्धस्य . . . तत्र
9. A मात्रं for मात्रो
12. $S^{1-2}$ मात्रत्वं for मात्रत्वात्; $S^{1-2}$ Om. प्रणवत्वमिति
15. $S^{1-2}$ Om. ओमित्यक्षरमुद्गीथः; A Om. ओमिति ह्युद्गान
16. $S^{1-2}$ प्रणवेनैव गानमिति वक्तुर्धन्विनो मकारान्तप्रणव एव एवं ($S^2$ Om. एवं) तात्पर्यः (!) तस्यैव for प्रणवगाने
20. A after पाठः adds : च



यदि केवलौकारपाठस्तदा ओ ओ इति गातव्यमित्यलं विस्तरेण ।

तस्मादेवमुक्तरीत्या ज्योतिष्टोमादिविश्वसृजामयनपर्यन्ताशीत्युत्तर-शतमहाक्रत्वर्थं क्षुद्रकल्पषडध्याय्यामाद्याध्यायत्रयोक्तग्रामकामज्योतिष्टो-मादिश्रीस्तोमतनुपृष्ठान्तसप्ततिक्रत्वर्थं तत्रत्यचतुर्थाध्यायोक्त-बृहद्रथन्तरपृष्ठः षडहादिपञ्चदशषडहभरतद्वादशाहादिदशोत्तर-शतद्वादशाहार्थं पञ्चमषष्ठाध्यायोक्तबृहद्रथन्तरपृष्ठद्वादशाहाद्यनन्त-द्वादशाहक्रत्वर्थं च ऊहरहस्ययोरधीतानां पञ्चचत्वारिंशदुत्तरशतसहस्र-संख्यानां साम्नामनधीतानां बहिष्पवमानादिगायत्राणां च **यः संयोगो यवान्तः** (पु.सू.६.११.१) इत्यादिपुष्पोक्तसंकृष्टव्यतिरिक्तानामर्थाद्विकर्षः कर्तव्यः । तथा ऊहगाने **योनिवत्स्वरा** (पु.सू.८.५.१) इति स्वरार्थानाम् अक्षरसंख्याभिर्विहितानां प्रस्तावप्रतिहाराणां च ऊनाक्षरपर्वसु अक्षरविकर्षसंभवत्तु स्वराक्षरसम्पादनार्थं विकर्षः कर्तव्यः इत्यलं विस्तरेण ।

**अष्टादशाक्षरताया इत्येके । अर्चामि सत्यसवꣳ रत्नधामभिप्रियं मतिं कविम् इति ॥१४॥**

1. A Om. यदि केवलौकार° . . . गातव्यमिति
2. A अग्नि॰ for ज्योति°; A पर्यन्तम् for पर्यन्त°
3. $S^{1-2}$ Om. महा
4. $S^2$ प्रतिष्ठा for पृष्ठा; 2. पृष्ठान्तं द्वादशाहादिदशोत्तरशतद्वादशाहार्थं पञ्चमषष्ठाध्यायोक्तबृहद्रथन्तरपृष्ठद्वादशाहादिनिर्दिशोत्तर द्वादशाहान्तसप्ततिक्रत्वर्थं तत्रत्यचतुर्थाध्याायोक्त बृहद्रथन्तरपृष्ठः षडहादि पञ्चदशषडहक्रतु-संख्याक्रत्वर्थं च for प्रष्ठान्त . . . द्वादशाहक्रत्वर्थं च (p.31, ln.2.)
5. A °भरतः for °भरत°
7. vide ln. 4 above, $S^2$ पृष्ठान्तं . . क्रत्वर्थं च; A सहस्राणां for सहस्रसंख्यानां
8. $S^{1-2}$ अधीतानां for अनधीतानां
9. $S^1$ इत्यादिषु फुल्ल° for इत्यादिफुल्ल°
12. $S^2$ A Om. इति
13. P Om. अष्टादशाक्षरताया इत्येके

तत्त्व० :- द्वादशाक्षरपादोऽष्टादशाक्षरपर्यन्तमभिक्रामतीति **एके** मन्यन्ते। उदाहरति - **अर्चामि सत्यसवꣳ रत्नधामभिप्रियं मतिं कविम्** (आ.श्रौ. ४.६.३) इतीति। अयमेव पादः सामशाखायां (सा ४६३) **कविम्** इति पाठाभावात् षोडशाक्षरः। सकारयुक्तात् **सत्यसवम्** इति पदरहिताद् यजुःशाखापाठात् (तै.सं. १.६.१.१) सप्तदशाक्षर इति बोध्यम् ॥ १४ ॥

छन्दो० - **एके** आचार्याः द्वादशाक्षरपादः अष्टादशाक्षरपर्यन्तमारोहतीत्याहुः। सप्तदशाक्षरस्योदाहरणं तैत्तिरीये यथा - **अर्चामि सत्यसवसꣳ रत्नधामभिप्रियं मतिम्** (तै.सं. १.६.१.१) इति अष्टादशाक्षरस्य तु सूत्रकारोक्तार्चामीत्यादि। एतदाश्वलायनसूत्रे **अभित्यं देवम्** (आ.श्रौ.४.६.३) इत्यत्र वेदान्तरसूत्रोदाहरणम् ऋग्वेदसर्वानुक्रमण्याम्। तस्याः पादच्छन्दोविध्यभावात् तद्विधानार्थम्। अस्य सूत्रस्य वेदान्तरेऽपि व्यापारोऽस्तीति सूचयितुं वा। एतत्पादमिश्रलक्षणं वक्ष्यमाणगायत्र्यादीनां प्रतिलक्ष्यं लक्ष्यानुरोधेन पादलक्षणे वक्तव्ये सूत्रस्य गौरवं स्यादित्युक्तमाचार्येणेति द्रष्टव्यम् ॥१४॥

## अथातो वृत्तिप्रदेशः ॥ १५ ॥

तत्त्व० - इति। **अथात** इति वाक्योपक्रमे। **वृत्तिप्रदेशः** वृत्तेरुपदेशः। वृत्तिर्नाम छन्दोविज्ञानहेतुः पादानामुपोत्तमाक्षरस्य लाघवं गौरवं चास्ति। तेन लघ्वाद्यक्षरेण छन्दोविशेषज्ञापनाय वृत्तिरिति संज्ञा क्रियत इत्यर्थः ॥१५॥

2. P इत्यन्ते for मन्यन्ते

9. S[1-2] सवꣳ for सवसꣳ

11. A सूत्रे उदाहरणम् for सूत्रोदाहारणम्; S[1-2] after उदाहरणम् add : तु

15. A Om. पाद°

19. S[1] लघ्वक्षरेण for लघ्वाद्यक्षरेण



छन्दो० - वृत्तिलक्षणेनापि पादान् व्यवस्थापयितुं वृत्तिलक्षणमाह- **अथातो वृत्तिप्रदेश इति**। **अथ**-शब्दोऽधिकारे। **अतः**शब्दो हेतुवचनः। यतो वृत्तिलक्षणमन्तरेण वृत्तिर्ज्ञातुमशक्या अतः **प्रदेशः** उपदेशः। यथा **विद्ययोः पथि मुनिप्रदिष्टयोः** (र.वं.११) इति रघुवंशे प्रयोगः। वृत्त्युपदेशः प्रस्तूयते इत्यर्थः। यद्वा **प्रदेशो** लक्षणम्। यथा - **अथोहगीतीनां प्रस्तावोद्देशः** (पु.सू.१०.१०.१) इत्यत्र उद्देशो लक्षणं प्रस्तूयते इत्यर्थः॥

## यत्र ह्रस्वमक्षरमुपोत्तमं पादस्य भवति सा जागती वृत्तिः ॥१६॥

तत्त्व० :- इति। **यत्र** ऋचि पादस्योपोत्तममक्षरं ह्रस्वं भवति। **सेति** वृत्तिविशेषणत्वकृतं स्त्रीत्वम्। **जागती** जगत्याः विज्ञापिका **वृत्तिः**। यथा- **विश्वाः पृतना अभिभूतरं नरः** (सा. ३७०) इति ॥ १६ ॥

## यत्र दीर्घं सा त्रैष्टुभी ॥ १७ ॥

तत्त्व० :- इति। **यत्र** पादस्योपोत्तममक्षरं **दीर्घम्** अनेकमात्रं सेत्युक्तार्थम्। **त्रैष्टुभी** (त्रिष्टुभो) विज्ञापिकावृत्तिरित्यर्थः। यथा- **प्रतु द्रव** (सा. ५२३) इति ॥ १७ ॥

छन्दो० तद्दर्शयति **यत्र त्रैष्टुभीति**। जागतो द्वादशाक्षरपादः। त्रैष्टुभः एकादशाक्षरपादः। यथाह शौनकः -

**पादौ गायत्रवैराजावष्टाक्षरदशाक्षरौ।**
**एकादशिद्वादशिनौ विद्यात् त्रैष्टुभजागतौ ॥**

(ऋ.प्रा. १७.३७.३८) इति। ततो यस्य पादस्योपोत्तममक्षरमुत्तमाक्षरसमीपमक्षरं ह्रस्वं भवति सा द्वादशाक्षरसंबन्धा वृत्तिर्भवति। यस्य

10. S[1-2] जगत्यादि for जगत्याः

पादस्योपोत्तममक्षरं दीर्घं सा एकादशाक्षरपादसंबन्धा वृत्तिर्भवति। एतदुक्तं भवति। यस्य पादस्योपोत्तममक्षरं ह्रस्वं भवति स द्वादशाक्षरपादः। यस्य पादस्योपोत्तममक्षरं दीर्घं स एकादशाक्षरपाद इति। द्वादशाक्षरपादस्य उदाहरणानि - **प्रियं चेतिष्ठमरतिं स्वध्वरम्** (सा. ४५)। **त्वां वृत्रेष्विन्द्र सत्पतिं नरः** (सा. २३४)। **अनूपे गोमान् गोभिरक्षाः** (सा. ९९२)। **घृतस्य विभ्राष्टिमनु शुक्र शोचिषः** (सा. ४६५)। **विश्वाः पृतना अभिभूतरं नरः** (सा. ३६०)। एकादशाक्षरपादस्य **यदि वा दधे यदि वा न** (ऋ. १०. १२९.७)। **न्यस्मिन्निन्द्रो जनुषेमुवोच** (सा. ३१३)। **तदिदास भुवनेषु ज्येष्ठम्** (सा. १४७७)। **अरण्योर्निहितो जातवेदाः** (सा. ७९)। **प्रेद्धो अग्ने दीदिहि पुरो नः** (सा. १३६९)। अस्या वृत्तेरन्यथात्वं च दृश्यते। यथा जागत्या वृत्तेः। **अभि वो वीरमन्धसो मदेषु गाय** (सा. २६५)। **विश्वाः पृतना अभिभूतरं नरः** (सा. ३७०)। **त्वं न ऊती त्वमिन्न आप्यम्** (सा. २६०)। त्रैष्टुभ्या वृत्तेस्तु **स बुध्न्या उपमा अस्य विष्ठाः** (सा. ३२१)। **प्रभञ्जन् सेनाः प्रमृणो युधाजयन्** (सा. १८४६)। एवं वृत्तेरन्यथात्वदर्शनात् एतद्वृत्तिलक्षणं प्रायिकमित्यवगन्तव्यम्॥ १६-१७॥

**तत्त्व०** - ननु **आ जुहोता हविषा मर्जयध्वम्** (सा. ६३) इति एकादशाक्षरपादे जागती वृत्तिः स्यादित्यत आह-

**ह्रस्वाक्षरस्योपरिष्टाद् व्यञ्जनसंनिपातेऽपि गौरवम्**

॥ १८॥ इति।

**तत्त्व० - उपरिष्टाद्** व्यञ्जनानां संनिपाते हलां संयोगे तत्पूर्वस्याक्षरस्य ह्रस्वस्यापि **गौरवं** गुरुत्वम्। तथा च पाणिनि :- **ह्रस्वं**

---

2. A Om. भवति

7. S[1-2] Om. एकादशाक्षरपादस्य . . . भूतरं नरः (l.1-9)

21. P संयोगः for संयोगे



**लघु** (पा.सू. १.४.१०) **संयोगे गुरु** (पा. १.४.११) **दीर्घं च** (पा.१.४.१२) इति। अत्रोपोत्तमस्याक्षरस्य ह्रस्वत्वेऽपि गौरवकार्यत्वात् त्रैष्टुभी वृत्तिर्भवतीति भावः॥ १८॥

**छन्दो०** - लक्षणान्तरं वक्तुं गुरुसंज्ञामाह - **ह्रस्वाक्षरस्येति**। **ह्रस्वाक्षरस्य** एकमात्राक्षरस्य **उपरिष्टाद् व्यञ्जनानां** हलां **संनिपाते** संयोगे सति **गौरवं** भवति। संयोगे परतः पूर्वं ह्रस्वमपि गुरुसंज्ञं भवतीत्यर्थः। तथा च संहितोपनिषदि श्रूयते - **उत्सेधपरोक्षवृद्धाग्नेः** (सं.उ.ब्रा.१.२१) इति। अपि-शब्दः समुच्चये। दीर्घाक्षरमपि गुरुसंज्ञं भवतीत्यर्थः। **ह्रस्वं लघु। संयोगे गुरु। दीर्घं च** (पा. १.४.१०-१२) इति हि पाणिनीयं सूत्रम्। गुरुसंज्ञाभाजो ह्रस्वस्यापि **ऊकालोऽज्झ्रस्वदीर्घप्लुतः** (पा. १.२.२७) इति पाणिनिकृतत्वात् अपिशब्देन पाणिनिकृतमेव समुच्चेतव्यम्। न तु यजुर्वेदप्रातिशाख्यकारादिकृतं समुच्चेतव्यम्। तैरेवमुक्तं दीर्घं यदच् यत् संयोगपरं ह्रस्वं यत् सानुनासिकं यच्च व्यञ्जनान्तम् एतानि गुरुसंज्ञानि भवन्तीति। तदुक्तम् -

**यद्व्यञ्जनान्तं यदु चापि दीर्घं**
**संयोगपूर्वं च तथानुनासिकम्।**
**एतानि सर्वाणि गुरूणि विद्या-**
**च्छेषाण्यतोऽन्यानि ततो लघूनि॥** (तै.प्रा.२२.१४)

इति लघून्यपि तैरेवोक्तानि। यथा -

**अव्यञ्जनान्तं यद्ध्रस्वमसंयोगपरं च यत्।**
**अननुस्वारसंयुक्तमेतल्लघु निबोधत॥** (तै.प्रा.२२.१५)

इति। शौनकेनाप्युक्तम् - **गुर्वक्षरम्। लघु ह्रस्वम्** (ऋ.प्रा.१८.२७)

---

6. A. Om. तथा च . . . इत्यर्थः।

10. S[1] ह्रस्वाक्षरस्य for ह्रस्वस्य।

12. A ननु for न तु; S[1-2] उक्तः for उक्तं

इत्यादिना ॥ १८ ॥

तत्त्व० - एवं छन्दोवृत्तिमुक्त्वा पादवृत्तिमाह-

**अष्टाक्षरद्वादशाक्षरौ लघुवृत्ती ॥ १९ ॥**

**दशाक्षरैकादशाक्षरौ गुरुवृत्ती ॥ २० ॥**

**तत्त्व०** - इति। लघु ह्रस्वं वृत्तिर्ज्ञापकम् उपोत्तममक्षरं ययोस्तौ तथोक्तौ। एवं **गुरुवृत्ती** इत्यत्रापि बोध्यम्। अत्र दशाक्षरपादस्य पृथक् छन्दःपादाभावेऽपि एकादशाक्षरपादे तुल्यवृत्तिप्रदर्शनं तनुभावेन तदन्तर्भावप्रदर्शनार्थम्। **अग्न आयाहि वीतये** (सा.१)। **अभि प्रियाणि पवते चनो हितः**। (सा.५५४)। **प्र तु द्रव परि कोशं निषीद** (सा. ५२३)। **पिबा सोममिन्द्र मन्दतु त्वा** (सा. ३९८) इति अष्टाक्षरादीनां पादानामुदाहरणानि ॥ १९-२० ॥

**छन्दो० - अष्टाक्षरद्वादशाक्षरौ लघुवृत्ती** (१९) इति अष्टाक्षरपादो द्वादशाक्षरपादश्च लघुवृत्ती भवतः। लघुवृत्तित्वं तु अष्टाक्षरपादस्य पञ्चममक्षरं सप्तमं च लघुनी स्याताम्। षष्ठं गुरु स्यात्। द्वादशाक्षरपादस्य षष्ठं नवमं च लघुनी स्याताम्। अष्टमं दशमं च गुरुणी स्याताम्। अष्टाक्षरपादस्योदाहरणम् - **अग्ने रथन्नवेद्यम्** (सा.५)। **बृहच्छोचा यविष्ठ्य** (सा.६५५)। **नमः सखिभ्यः पूर्वसद्भ्यः**

1. S[1-2] after इत्यादिना। add :- पद्यच्छन्दोविचितिसूत्रकारिणस्तु वर्णाः सर्वे गुरवः। अर्धे कलास्तद्वर्णसंख्योविशिष्टा गुरवः। अनेजेन्ता (S[2] अनेज्जेत्ता) लघवश्च इत्याहुः। केदारास्तु-

सानुस्वारो विसर्गान्तो दीर्घयुक्तपरश्च यः।
वा पादान्तस्त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको लृजुः ॥ (वृ.र.१.९)

इति। वृत्तरत्नावलीकृद्वेङ्कटेशास्तु-

वर्णो दीर्घो युक्तपरो मोक्षान्तश्च सबिन्दुकः।
गुरुर्भवेद्वा पादान्तस्तदन्यो लघुसंज्ञकः ॥

इत्यवोचत्। तदत्र सर्वमविवक्षितं गुरुत्वेन।

7. S[1] तन्म for तनु°।



(सा.१८२२)। **इमं मे वरुण श्रुधी हवम्** (सा. १५७९)। द्वादशाक्षरस्य पादस्य **भरद्वाजे समिधानो यविष्ठ्या** (सा. ३६)। **त्वे देवा** हविरदन्त्याहुतम् (सा.१०६०) ॥ १९ ॥

**दशाक्षरैकादशाक्षरौ गुरुवृत्ती** ॥ २० ॥ स्पष्टोऽर्थः इति। गुरुवृत्तित्वं तु दशाक्षरपादस्य उपोत्तममक्षरं तत्पूर्वं च लघुगुरुणी स्याताम्। एकादशाक्षरपादस्य षष्ठं, नवमं च लघुनी स्याताम्। अष्टमं, दशमं च गुरुणी। दशाक्षरस्योदाहरणम् - **पिबा सोममिन्द्र मन्दतु त्वा** (सा.३९८)। **ब्रह्मजज्ञानं प्रथमं पुरस्तात्** एकादशाक्षरस्य (सा.३२१)। लघुगुरुवृत्त्योरपि अन्यथात्वं च दृश्यते। यथा अष्टाक्षरस्य **दिविसद्भूम्या ददे** (सा.४६७)। **अश्वं नत्वा वारवन्तम्** (सा.१७)। द्वादशाक्षरस्य **ईशानमस्य जगतः स्वर्दृशम्** (सा.२३३)। दशाक्षरस्य-**सोतुर्बाहुभ्यां सुयतो नार्वा** (सा.३९८)। एकादशाक्षरस्य- **असावि देवं गोऋजीकमश्वः** (सा.२१३)। एवं वृत्त्योरन्यथात्वदर्शनात् वृत्तिलक्षणमिदं प्रायिकमिति द्रष्टव्यम्। तदुक्तं यजुर्वेदसर्वानुक्रमणीकारेण। तद्यथा- **लघुवृत्तित्वं चाष्टाक्षरस्य पञ्चममक्षरं सप्तमं च लघु स्यात्। षष्ठं गुरु। दशाक्षरस्य उपोत्तमे अक्षरे लघुगुरुणी स्याताम्।** एकादशाक्षरस्य द्वादशाक्षरस्य च षष्ठं, नवमं च लघुनी। अष्टमं दशमं च गुरुणी। सर्वेषां प्रथमाक्षरादूर्ध्वं लघुद्वयं न स्यात्। एतया वृत्त्या विभागम् ऋग्यजुषस्य विद्यात्। वृत्तेरन्यथात्वं च दृश्यते। **बृहस्पतिः पुर एता ते अस्तु** (तै.सं.१.२.३.३) **तत्सवितुर्वरेण्यम्** (सा.१४५६) इति ॥२०॥

**तत्त्व०** - ननु छन्दांसि व्याख्यास्याम इति प्रतिज्ञाय पादानां लक्षणकथनमयुक्तम् इत्यत आह -

**एतैः खलु छन्दांसि वर्तन्ते ॥ २१ ॥**

13. S[1] अनन्यथात्व for अन्यथात्व°।
22. PS[2] कथनं (कथं) युक्तम् for लक्षणकथनमयुक्तम्।

इति **एतैरुक्तलक्षणैः** पादैर्यथायथं **छन्दांसि** वक्ष्यमाणानि प्रवर्तन्ते । अतः पादलक्षणकथनं नासङ्गतमिति भावः । यद्यप्यतिच्छन्दस्सु त्रयोदशाक्षरादयः पादाः सन्ति, तथापि एतेषामेव पादानामतिक्रमेणाक्षरसंपत्त्यानुगुण्येन विधृत्यादीन्यतिच्छन्दांसि भवन्तीति ध्येयम् ॥ २१ ॥

**छन्दो॰** - **एतैरुक्त** [लक्षणैश्]] चतुर्भिः पादैर्व्यस्तैस्समस्तैश्च गायत्र्यादीनि **छन्दांसि** प्रवर्तन्त इत्यर्थः । तत्र व्यस्तैर्यथा- एकेनाक्षरेण द्वाभ्यां त्रिभिश्च गायत्री । चतुर्भिरनुष्टुप् । पञ्चभिः पङ्क्तिः । षड्भिर्जगती । सप्तभिः शक्वरी । एकेन दशाक्षरेण द्वाभ्यां त्रिभिश्चतुर्भिश्च विराट् । एकेनैकादशाक्षरपादेन द्वाभ्यां चतुर्भिश्च त्रिष्टुप् । त्रिभिर्विराट् । एकेन द्वादशाक्षरपादेन द्वाभ्यां चतुर्भिश्च जगती । त्रिभिः सतो बृहती ।

समस्तैर्यथा- द्वाभ्यामष्टाक्षरपादाभ्याम् एकेन द्वादशाक्षरपादेन चोष्णिक् । एकेनाष्टाक्षरपादेन द्वाभ्यां द्वादशाक्षरपादाभ्यां पिपीलिकामध्यानुष्टुप् । द्वाभ्यामष्टाक्षरपादाभ्यां द्वाभ्यां द्वादशाक्षरपादाभ्यां च पङ्क्तिविशेषः । त्रिभिरष्टाक्षरैरेकेन द्वादशाक्षरेण बृहती । त्रिभिरेकादशाक्षरैरेकेनाष्टाक्षरेण च त्रिष्टुब्विशेषः । चतुर्भिरष्टाक्षरैरेकेन द्वादशाक्षरेण च त्रिष्टुप् । एवमन्यान्यपि यथासंभवं द्रष्टव्यम् ॥

ननु स्वतन्त्रैः षडक्षरपादादिभिरपि छन्दांसि वर्तन्ते । गायत्र्युष्णिगक्षरपङ्क्त्यादयः । अतः कथमेतैः खलु छन्दांसि वर्तन्ते इत्युच्यते । एतेषां बहुलप्रयोगत्वात् । मल्लग्रामवत् न्यायशास्त्रवच्च व्यपदेशः ॥ २१ ॥

**तत्त्व॰** - पादानां लक्षणं परिसमाप्य प्रकृतं प्रतिजानते -

---

3. AS[1] अतिरेकेण for अतिक्रमेण
14. S[1] एकैकेन for एकेन
15. A trans. एकेन after च; A trans एकेन before त्रिष्टुप्
19. S[1-2] शास्त्रमितिवत् for शास्त्रवत्



**पथ्यान्येवाग्रे सप्त चतुरुत्तराणि छन्दांसि व्याख्यास्यामः ॥ २२ ॥**

इति । पन्थानं प्रातर्माध्यंदिनतृतीयसवनरूपं यज्ञमार्गं सर्वक्रतुष्वञ्जन्तीति **पथ्यान्येव सप्त** गायत्र्यादिजगत्यन्तानि । **चतुरुत्तराणि** उत्तरोत्तरं चतुःसंख्ययातिरिक्तानि छन्दांसि अग्रे विधृत्यादिभ्यः पूर्वं व्याख्यास्यामः इति । यद्यप्यचतुरुत्तराणि अक्षरपङ्क्त्यादीनि तथापि तानि पथ्यान्येवेति प्रसङ्गादुक्तानीति न दोषः ॥ २२ ॥

*इति **श्रीतातप्रसाद**कृतायां तत्त्वसुबोधिनीनिदानसूत्रवृत्तौ*
*प्रथमपटले प्रथमः खण्डः ॥ १ ॥*

**छन्दो॰**- एवं परिभाषादिकमुक्त्वा पुनः प्रतिजानीते **पथ्यान्येवेति** । गायत्र्यादिविराट्कामान्तेषु छन्दस्सु मध्ये पूर्वस्मात् पूर्वस्मात् छन्दसः उत्तरमुत्तरं चतुर्भिश्चतुर्भिरक्षरैरधिकानि यानि गायत्र्यादीनि तानि अग्रे पथ्यसंज्ञानि सप्त छन्दांसि वक्ष्याम इत्यर्थः । अत्र गायत्रीव्यतिरिक्तानामुष्णिगादिजगत्यन्तानां षण्णामेव चतुरुत्तरत्वम् । न तु गायत्र्याः । तस्या आदिमत्वात् । यद्वा प्राञ्चि गायत्र्याः पञ्च कृतिच्छन्दांसि । कृतिश्चतुरक्षरा । प्रकृतिरष्टाक्षरा । संकृतिर्द्वादशाक्षरा । अभिकृतिः

---

3. P °माध्यं° for °मध्यं°; S[2]P अर्हति for अञ्जन्ति
6. PS[2] चतुरुत्तराणि for अचतुरुत्तराणि; PS[2] Om. अक्षर
11. S[1] छन्दसां for छन्दःसु
12. A Om. one चतुर्भिः
14. A चतुरुत्तराणि for चतुरुत्तरत्वम्
15. A क्रतु°, S[2] पङ्क्ति° for कृति°

षोडशाक्षरा। उत्कृतिर्विंशत्यक्षरा इति वक्ष्यति। तत्रोत्कृत्यपेक्षं चतुरुत्तरत्वं द्रष्टव्यम्। इदं चतुरुत्तरत्वं तत्तत्पूर्णच्छन्दोऽपेक्षं द्रष्टव्यम्। प्रायिकाभिप्रायं वा॥ २२॥

*इति तञ्जावूरग्रामनिवासिना पेत्ताशास्त्र्यपराभिधानेन हृषीकेशशर्मणा विरचितायां छन्दोविचितिवृत्तौ प्रथमे पटले प्रथमः खण्डः॥ १॥*



1. AS[2] Om. विंशत्यक्षरा इति
2. A तत्तत्
4. A Om. अपराभिधानेन हृषीकेशशर्मणा

## द्वितीयः खण्डः

**चतुर्विंशत्यक्षरा गायत्री। त्रिपदाष्टाक्षरपादा॥ १॥**

**तत्त्व०** – **चतुर्विंशत्यक्षरा गायत्री** भवति। तस्या इदं लक्षणम् - **त्रिपदाष्टाक्षरपादेति**। उदाहरणम् - **अग्न आ याहि वीतये** (सा.१) इति॥ १॥

**छन्दो०** – तानि सप्त छन्दांसि क्रमेणाह - **चतुर्विंशतीति**। त्रयः पादा यस्या ऋचः सा त्रिपदा। **संख्यासु पूर्वस्य** (पा ५.४.१४०) इत्यकारलोपः। **पादः पद्** (पा ६.४.१३०) इति पदादेशः। **टाबृचि** (पा ४.१.९) इति टाप्-प्रत्ययः। अष्टाक्षराः पादाः यस्याः सा तथोक्ता। अष्टाक्षरपादत्रयवती ऋक् गायत्री भवति। सा चतुर्विंशत्यक्षरा चेत् अक्षरैः पूर्णा गायत्री भवतीत्यर्थः। उदाहरणानि तु **अग्न आयाहि वीतये** (सा. १)। **उच्चा ते जातमन्धसः** (सा. ४६७)। **त्वन्नो अग्ने महोभिः** (सा. ६)। **प्रेष्ठं वो अतिथिम्** (सा.५)। **त्वमग्ने यज्ञानां होता** (सा.२)। **अभीषुणः सखीनाम्** (सा.६४८)। **उपशिक्षोपतस्थुषः** (सा.७५५)। **प्रेष्ठं व** इत्येषा पादनिचृत् गायत्रीति पाणिन्यनुज*पिङ्गलनागे*नोक्ता। तद्यथा-

3. S[2]P after भवति ins. इति।
10. S[1-2] अष्टाक्षरैः for अक्षरैः।
11. S[1-2] Om. भवति।
15. S[1-2] Om. तद्।

षट्सप्तकयोर्मध्येऽष्टावतिपादनिचृत् (पिं.छ.३.११) इति। **अभी षुण** (सा.६७८) इत्येषा बह्वृचतैत्तिरीयाणां पादनिचृत् गायत्री भवति। तदुक्तम् ऋग्वेदसर्वानुक्रमणीकारेण ***वररुचिना- त्रयः सप्तकाः पादनिचृद्*** (१.३.४) इति । उक्तं च यजुर्वेदसर्वानुक्रमणीकारेण ***यास्केन*** **सप्तकैस्त्रिभिः सा पादनिचृद्** इति। अत्र प्रथमं गायत्र्या लक्षणकरणम्। **अथातो निर्वचनम्। गायत्री गायतेः स्तुतिकर्मणः** (दे.अ.ब्रा. ३.१-२) । इति देवताध्यायब्राह्मणे गायत्र्याः प्रथमं निर्वचनात् प्राधान्याच्च । प्राधान्यं तु **मुखं गायत्री छन्दसाम्** (जै.ब्रा. २.१३) इति श्रुतेः । बह्वृचब्राह्मणेऽपि **अग्रं वै छन्दसां गायत्री** (ऐ.आ.१.४.१) इति। ननु अष्टाक्षरपादेति वचनात् **उच्चा ते** (सा. ४६७) - **त्वन्नो अग्ने** (सा.६)- इत्येवमादीनां तदभावात् गायत्रीत्वं न स्यादिति चेत्। उच्यते। **अष्टाक्षर आपञ्चाक्षरतायाः प्रतिक्रामति** (नि.सू.१.१.५) इत्यादि परिभाषया तन्न्यूनाक्षराणामपि अष्टाक्षरपादत्वेन परिभाषितत्वात् गायत्रीत्वं भवत्येव। किं तु ताश्चतुर्विंशत्यक्षररहितत्वात् ऊनाक्षरा गायत्र्यो भवन्ति । तथैव **ऊनाक्षरा गायत्री आमहीयवे** (ष.ब्रा.१.३.१८) इति **ऊनाक्षरा गायत्री पृष्ठेषु वाम्देव्ये** (ष.ब्रा. १.३.१६) इति च षड्विंशब्राह्मणे श्रूयते । अत्रोनाक्षरेत्येतत् स्वरूपपरम्। न तु तस्य संज्ञायामनुप्रवेशः। काणो देवदत्तः। पङ्गुर्यज्ञदत्तः। कुणिर्विष्णुदत्तः इतिवत्। तत्रैव षड्विंशब्राह्मणे **द्वे गायत्र्यां सामनी** (ष.ब्रा.१.३.१२) इति । महाब्राह्मणेऽपि **एतावता वाव माध्यन्दिनं सवनं पुपुवे** (तां.ब्रा.७.३.१) इत्यत्र **आत्मा वै यज्ञस्य पवमानो मुखं गायत्री प्राणो गायत्रम्** । **यद् गायत्र्यां गायत्रेण स्तुवन्ति** (तां.ब्रा.७.३.७) इति वामदेव्यस्यापि । **तानि पृष्ठानि** ।

2. $S^{1-2}$ Om. भवति।
4. $S^{1-2}$ Om. यास्केन।
7. A निर्वचनप्रा. for निर्वचनात् प्रा.।
8. $S^{1-2}$ तत् for प्राधान्यं।
11. $S^{1-2}$ Om. आदि।
13. $S^{1-2}$ trans. तथा च for तथैव।



**बार्हतानि एकगायत्रीकाणि** (ष.ब्रा.१.३.७.८) इति **आपो वा ऋत्वियमाच्छर्द्** (तां.ब्रा.७.८.१) इत्यत्र **यद् गायत्रीषु तेनाग्नेयं गायत्रच्छन्दा ह्यग्निः** (तां.ब्रा.७.८.४) इति केवलगायत्रीत्वेन श्रवणात्। ननु **ऊनाक्षरा गायत्री** (ष.ब्रा.१.३.१६) इत्येतदामहीयवाद्ययोः स्तोत्रीययोः वामदेव्यमध्यमायाश्च निचृद्गायत्रीपरम् । **या एकेनाक्षरेणोनास्ता निचृत** (नि.सू.१.६.२) इति वचनात् । आमहीयवोत्तमस्तोत्रीयायास्तु **राट्** गायत्रीपरम्। **द्वाविंशत्यक्षरप्रभृतयः** (नि.सू.१.५.१३) इत्यादिषु **राट् सम्राड्** (नि.सू.१.५.१४) इति वचनात् इति चेत्। उच्यते। अक्षरन्यूनानामेव गायत्र्यादीनां निचृत्त्वादिविशेषणस्य वैकल्पिकत्वात् । वामदेव्यस्योत्तमायां स्तोत्रीयायां स्वरूपपरमित्येवाङ्गीकर्तव्यम् । त्र्यक्षरन्यूनायामेतच्छन्दोविचितौ विशेषसंज्ञाविध्यभावाच्च। **आदशाक्षरताया अभिक्रामति** (१.१.८) इति परिभाषया नवाक्षरदशाक्षरयोरपि पादयोरष्टाक्षरपादत्वेन परिभाषितत्वात् । अधिकाक्षरा अपि गायत्र्यो भवन्ति **उपशिक्ष** (सा.७५५) इत्यादयः । एवं तर्ह्यव्यवस्था स्यात्। एतावन्न्यूनत्वमेतावदाधिक्यमिति वचनाभावात् इति चेत् । सत्यम् । वचनाभावेऽपि यावत् प्राक् पूर्णच्छन्दस्तावदूनत्वम् । यावदुत्तरं पूर्णच्छन्दस्तावदाधिक्यमित्यवगन्तव्यम् । विरोधाभावात् । तद्यथा-

7. A आमहीयवस्योत्तरयोस्तोत्रीयायाः for स्तोत्रीयायास्तु
10. $S^{1-2}$ after स्तोत्रीयायां add: तु
13. $AS^{1}$ भाषायाः for भाषया
13. $S^{1}$ आनवा for नवा; $S^{1-2}$ दशाक्षरपादयोरपि for दशाक्षरयोरपि पादयोः
14. $S^{1-2}$ trans. उपशिक्षेत्यादयः before अधिकाक्षराः
15. $AS^{1}$ तस्य अव्यवस्था for तर्ह्यव्यवस्था
16. $S^{1-2}$ उच्यते for सत्यम्
17. $S^{1-2}$ Om. वचनाभावेऽपि
17. A न्यूनता for ऊनत्वम्।
18. $A^{1-2}$ तावानधिकः for तावदाधिक्यम्।
18. A Om. विरोधाभावात्।

उत्कृतिर्विंशत्यक्षरा (नि.सू.१.५.११) इति वचनात् गायत्र्याश्चतुरक्षरोनत्वं त्र्यक्षराधिकता च। पूर्णोष्णिहोऽष्टाविंशत्यक्षरत्वात्। एवमुष्णिहादीनामपि तत्तत्पूर्वोत्तर-पूर्णच्छन्दोऽपेक्षमूनाधिक्यं द्रष्टव्यम्। यद्येवमुपशिक्षेतीय गायत्री वा उष्णिग् वा ककुब् वा इति संशयः स्यात् इति चेत्। यदत्र वक्तव्यं तत् सर्वं संशयितच्छन्दोनिर्णये **चतुष्टयेन छन्दो जिज्ञासेत** (नि.सू.१.६.७) इत्यत्र वक्ष्यामः ॥ १ ॥

## अथापि चतुष्पदा भवति। षडक्षरपादा ॥ २ ॥

**तत्त्व०** - **अथापि** अन्येनापि प्रकारेण भवति। गायत्रीप्रकारान्तरमेव दर्शयति - **चतुष्पदा भवति। षडक्षरपादेति** ॥२॥

**छन्दो०** - **अथ**-शब्दो वाक्योपन्यासे। **अपि**-शब्दः समुच्चये। एवं वक्ष्यमाणा अपि द्रष्टव्याः। चतुर्विंशत्यक्षरयुक्ता पादचतुष्टयवत्यपि गायत्री भवति। पादाः षडक्षराः। तथा चोपनिषदि श्रूयते - **सैषा चतुष्पदा षड्विधा गायत्री** (ष.ब्रा.३.१२.५) इति ॥ २ ॥

## तच्चापि पाञ्चाला उदाहरन्ति । पेटिलालकन्ते पेटाविटकन्ते । तत्र किकुबद्धस्तज्जग्धृ परेहि ॥३॥

2. S[1] after गायत्र्याः ins. तु।
2. A अक्षरन्यूनता for अक्षरोनत्वम्।
2. S[1-2] आधिक्यम् for त्र्यधिकता।
3. A Om. पूर्वोत्तर।
3. A अपेक्षया न्यूनाधिकता द्रष्टव्या for अपेक्षमूनाधिक्यं द्रष्टव्यम्।
4. A ककुब् वा गायत्री वा for गायत्री... ककुब् वा।
11. S[1] after वती ins. इति।
16. S[2] ककुबद्धं, A ककुन्धं, for किकुबध।
16. S[1-2] जघ्यु for जघ्।



**तत्त्व०** - तच्चापि प्रकारान्तरं पाञ्चालाः शाखाविशेषाध्येतारः **पेटिलालकन्त** इत्युदाहरन्ति। *शौनकस्तु*- **इन्द्रः शचीपतिर्बलेन वीळितः। दुश्च्यवनो कृषा समत्सु सासहिः** (ऋ.प्रा.१६.१७) इत्युदाजहार ॥

ननु त्रिपदाष्टाक्षरपादेत्येतावता तल्लक्षणसिद्धेश्चतुर्विंशत्यक्षरेति वचनम् [अनर्थकमिति चेत् । न ।] अपादबद्धमन्त्राणामपि चतुर्विंशत्यक्षरतामात्रेण गायत्रीत्वं भवतीति प्रदर्शनार्थम्। एवमुत्तरत्रापि बोध्यम् ॥ ३ ॥

**छन्दो०** - **तत्** छन्दः पाञ्चालशाखाध्यायिनः **पेटिलालकन्ते**-त्याद्युदाहरन्तीत्यर्थः। इदमप्युदाहरणम् - **इन्द्रः शचीपतिर्बलेन व्रीळितः। दुश्च्यवनो वृषा समत्सु सासहिर्** (ऋ.प्रा. १६.१७) इति ॥ ३ ॥

## अष्टाविंशत्यक्षरोष्णिक् त्रिपादेव। पूर्वावष्टाक्षरावुत्तमो द्वादशाक्षरः ॥ ४ ॥

**तत्त्व०**- इति। अष्टाविंशत्यक्षरोष्णिक् भवति। तस्याः लक्षणम्- **पूर्वावष्टाक्षरपादौ उत्तमो द्वादशाक्षर** इति। उदाहरणम्। **अग्ने वाजस्य गौतमः** (सा.६६) इति ॥ ४ ॥

**छन्दो०** - गायत्रीच्छन्दोऽपेक्षया चतुरक्षरवृद्ध्या ऊर्ध्वं स्निह्यति वर्द्धत इति उत्पूर्वात् स्निह्यतेर्धातोः **ऋत्विग्दधृग्**

2. P लालक for लालकन्त।
4. S[2]B after जहार for इति।
5. S[1]P सिद्धिः for सिद्धेः।
5. P Om. चतुर्विंशत्यक्षरेति . . . बोध्यम्।
9. A Om. आदि।
13. S[1-2] उत्तरो for उत्तमो।
17. S[2] वृद्धा for वृद्ध्या।
18. S[2] before उत् ins. पुनर्।

**स्रग्दिगुष्णिगञ्च्युजिक्रुञ्चां च** (पा.३.२.५९) इति निपातनात् उष्णिक् भवति। तदुक्तं देवताध्यायब्राह्मणे - **उष्णिगुत्स्नायात् स्निह्यतेर्वा** (दे.अ.ब्रा३.४) इति। गोपङ्क्जादिवत् योगरूढत्वात् अस्या एवोष्णिक्त्वम्। **त्रिपदैवे**त्येवकारो भिन्नक्रमः उष्णिगित्यनेन संबध्यते। पादत्रयवती उष्णिगेव भवति। पादाश्च प्रथमद्वितीयावष्टाक्षरौ तृतीयो द्वादशाक्षरः। सा अष्टाविंशत्यक्षरा चेत् अक्षरैः पूर्णा उष्णिक् भवति। एषा तैत्तिरीयाणां पुर उष्णिक् भवति। तदुक्तं तत्सर्वानुक्रमणीकृता- **तृतीयश्चेत् पुर उष्णिक्** (        ) इति। सैषा एवकारेण निरस्यते। छन्दोगानां तु निरुपपदैव श्रूयते। यथा **उष्णिह उत्तमं पदं भूयिष्ठाक्षरम्**। (तां.ब्रा.८.५.२) इति। उदाहरणम् - **अग्ने वाजस्य गोमतः** (सा.९९)। **इन्द्रमच्छ सुता इमे** (सा. ५६६)। **एतोन्विन्द्रं स्तवाम सखायःस्तो** (सा.३८७)। गायत्र्यनन्तरम् उष्णिहो लक्षणकथनं देवताध्याये तथा निर्वचनात्। एवं वक्ष्यमाणान्यपि द्रष्टव्यानि। उष्णिगादीनामुक्ताक्षररहितानां गायत्रीवत् समाधातव्यम्॥ ४॥

## अथ यत्र मध्ये द्वादशाक्षरा सा ककुप्॥ ५॥

**तत्त्व०** - इति। **यत्र ऋचां मध्ये** द्वादशाक्षरपादो भवति। अभितोऽष्टाक्षरौ, सा **ककुप्**। यथा- **पवस्व मधुमत्तमः** (सा.५७८) इति॥ ५॥

**छन्दो०** - ककुदिव तिष्ठति कुब्जवद्वा तिष्ठतीति ककुप्। तदुक्तं देवताध्याये- **ककुप् ककुद्रूपिणीत्यौपमिकम्। ककुप् च कुब्जश्च** (दे.अ.ब्रा.४.५.६) इति। यत्र मध्ये द्वादशाक्षरपादोऽभितोऽष्टाक्षरपादौ

6-7. AS$^{2}$ पर for पुर।
8. S$^{2}$ Om. श्रूयते।
9. S$^{1-2}$ पादं for पदं।
12. A after तथा adds : च।
15. S$^{1}$ ऋचि for ऋचां।
18. S$^{1-2}$ अष्टाक्षरैः for अक्षरैः।



सा ककुप् भवति। श्रूयते च **तस्मात् ककुभो मध्यमं पदं भूयिष्ठाक्षरम्** (तां.ब्रा.८.५.२) इति। **पवस्व मधुमत्तमः** (सा.५७८)। **प्र मंहिष्ठाय गायत** (सा.१०७)। **ससुन्वेयो वसूनाम्** (सा.५८२)। **उपशिक्षापतस्थुषः** (सा.७५५)। **ससुन्व** इतीमां यवमध्यां गायत्रीति बह्वृचाः प्राहुः। तदुक्तं *शौनकेन* -

**आद्यन्तौ सप्तकौ यस्यां मध्ये च दशको भवेत्।**
**यवमध्या तु गायत्री ससुन्व इति दृश्यते॥**

(ऋ.प्रा. १६.२७) इति। सामगानां तु तस्याः ककुप्त्वमेव। **उपशिक्ष** (सा.६६५) इत्येषा उष्णिक् भवति। ककुबपि गायत्र्यपि भवति। तथैव **चतुष्टयेन छन्दो जिज्ञासेत** (नि.सू.५.७) इत्यत्र वक्ष्यामः। बह्वृचास्तु **उपशिक्ष** (सा.६७१) इतीमां गायत्र्येवेत्याहुः। तदुक्तं तत्सर्वानुक्रमण्यां **परं गायत्रं प्राग्वत् सप्रेरिति** (ऋ.अ.२.८.१)॥ ५॥

## यत्र प्रथमः सा पुरउष्णिक्॥ ६॥

**तत्त्व०** - इति। **यत्र** ऋचि द्वादशाक्षरपादः **प्रथमः** उत्तरावष्टाक्षरौ **सा पुरउष्णिग्** भवति। उदाहरणम् - **आविर्मर्या आ वाजं वाजिनो अग्मन्** (सा.४३५) इति॥ ६॥

**छन्दो०** - यत्राद्यो द्वादशाक्षरपादः परावष्टाक्षरौ सा पुर उष्णिक्। यथा **आविर्मर्या आ वाजं वाजिनो अग्मन्** (सा. ४३५) इति। ऋग्वेदेऽपि। **युञ्जन्ति हरी शषिरस्य गाथयोरौ रथ उरुयुगे। इन्द्रवाहा वचोयुजा** (ऋ.८.९८.९)॥ ६॥

1. S$^{1}$ पादं for पदं।
4. S$^{2}$ मध्यां गायत्रीं for मध्या गायत्री।
19. A Om. इन्द्रवाहा वचोयुजा।

**अथापि चत्वारः सप्ताक्षरा इत्युदाहरन्ति ।**

**नदं व ओदतीनाम्** (सा.१५०६) इति ॥ ७ ॥

**तत्त्व०** - **अथापि** अन्यापि भवत्युष्णिक् । तस्याः लक्षणम् - **चत्वारः सप्ताक्षराः** । पादा इति शेषः । स्पष्टमन्यत् ॥ ७ ॥

**छन्दो०** - अष्टाविंशत्यक्षरोष्णिगिति वर्तते । सप्ताक्षरपादाश्चत्वारो यस्याः साप्युष्णिक् भवति । स्वयमेवोदाहरति - **नदं व ओदतीनाम्** (सा.१५०६) इति । स्वेनैवोदाहृतं तु अत्राघ्नियानामिति विकृष्य तृतीयपादस्य सप्ताक्षरत्वं द्रष्टव्यमिति सूचनार्थम् । **एतानि सन्धीत्यत्र द्वैधं कुर्यादसम्पूर्णे** (नि.सू.१.७.३४) इति वचनात्। किं च **नदं व ओदतीना**मित्युष्णिगक्षरैर्भवति **अनुष्टुप्पादै**रिति **बह्वृच**ब्राह्मणेऽनुष्टुप्। श्रवणमनुष्टुपपादसाम्येन गुणवादार्थम् । न त्वनुष्टुबिति सूचनार्थम् । तदुक्तं ***षड्गुरुशिष्येण*** - (ऋ.आ. वेदार्थदीपिका १.५.८)

**अनुष्टुप्पादसाम्येन गुणवादोऽयमुष्णिहः ।**
**रहस्यब्राह्मणेऽप्येवं सम्यगाम्नायते खलु ॥**

इति । अत एवोक्तमृग्वेदसर्वानुक्रमणीकृता **चतुस्सप्तकोष्णिगेव** (ऋ.अ.१.५.८) इति ॥ ७ ॥

**द्वात्रिंशदक्षरानुष्टुप् चतुष्पदाष्टाक्षरपादा ॥ ८ ॥**

**तत्त्व०** - अष्टाक्षरपादचतुष्टयवती अनुष्टुप् भवति । यथा- **पुरोजिती वो अन्धसः** (सा. ५४५) इति ॥ ७ ॥

**छन्दो०** - अनुपूर्वात् स्तुभेर्द्धातोः **क्विप् च**(पा.३.२.७६)ति क्विप्प्रत्यये अनुष्टुबिति भवति । तदुक्तं देवताध्याये **अनुष्टुबनुस्तोभनात्**

9. A चत्वारि for एतानि ।
20. P गायन्ति त्वा गायत्रिणः इत्यादिः for पुरो . . . अन्धस्व इति ।



(दे.अ.ब्रा.३.७) इति । अष्टाक्षरपादचतुष्टयवती ऋक् अनुष्टुब् भवति । सा द्वात्रिंशदक्षरा चेत् अक्षरैः पूर्णानुष्टुब् भवति । **ऋचं साम यजामहे** (सा. ३६९) । **इन्द्रं विश्वा अवीवृधन्** (सा. ३४३) । **पुरोजिती वो अन्धसः** (सा.५४५) । **ये यन्ति प्राञ्चः पन्थानः** (मं.ब्रा.२.६.३) । **उद्यँल्लोकानरोचयः** (आ.गा.६.२.२७९) इति साम ॥

ननु **उद्यँल्लोकानरोचय** इति साम्नः स्तोभात्मकत्वेन ऋगध्ययनाभावात् कथमनुष्टुप् छन्द इति चेत् । सत्यम् । ऋगध्ययनाभावेऽपि **तेषामृग्यत्रार्थवशेन पादव्यवस्था** (जै.सू.२.१.३५) इति न्यायसूत्रेण पादबन्धनादृक्त्वं प्रतिपादितम् । अत **उद्यँल्लोका**नित्यस्याप्यष्टाक्षरपादचतुष्टयत्वेन ऋग्गीतित्वादनुष्टुब् भवति । यद्येवं **भूः** । **भुवाः** । **सुवाः** । **सत्याम्** । **पुरुषा** इति पञ्चानां व्याहृतिसाम्नामपि छन्दः स्यात् । तथाहि - भूरित्यस्य देवी गायत्री । भुवा
2 1
इत्यस्य देव्युष्णिक् । अन्येषां देव्यनुष्टुप् । तथा **प्रजापतेर्हृदयस्य** । हाउ
1 2 1
(त्रिः) । **इमाः** (त्रिः) **प्रजाः** (त्रिः) (आ.गा. २४३) इति साम्नोऽपि एकादशाक्षरपादद्वयवत्त्वात् द्विपदा त्रिष्टुप् स्यात् । **अगन्मज्योतिर्** (आ.गा.४.१.१७०) इति सत्रस्यर्धिसाम्नोऽपि त्रिष्टुप् स्यात् । तथा अन्येषामपि एवंजातीयकानां पादबद्धानां स्तोभात्मकानां साम्नां छन्दः स्यादिति चेत् । उच्यते । भवत्येव । को वा नेति ब्रूयात् । न च **यच्छन्दस्कायामृचि गीयते तदस्य छन्दः** (नि.सू.१.१३.१९) [इति] प्रतिपादनात् स्वातन्त्र्येण साम्नां न छन्द इति वाच्यम् । ऋगध्ययनजुषां साम्नां तथास्तु । बह्वृचतैत्तिरीयाद्यनधीतानामर्थवशेन पादव्यवस्थाजुषां

9. A बन्धानां for बन्धनात् ।
10. $S^{2}$ ऋक्त्वात् for ऋग्गीतित्वात् ।
14. $S^{1-2}$ सम्नाम् for साम्नो ।
16. A Om. सत्यस्यर्धि ।
18. A Om. न च यच्छन्दस्कायाम् . . . छन्दोऽस्त्येव ।

देवतापदरूपस्तोभजुषां तदन्यसाम्नां च स्वातन्त्र्येण सच्छन्दस्कत्वमस्तु। विरोधाभावात्। अधीतानामृचामभिव्यक्तिरूपसामनि **यच्छन्दस्कायाम्** (नि.सू.१.१३.१९) इति पारतन्त्र्यं चास्तु । तत्राविरोधात् । न च हाउकारदेवतापादादिसत्त्वस्थले ऋगध्ययनजुषि साम्नि पञ्चनिधनवामदेव्यमहावैश्वानरादौ छन्दोद्वयं स्यादिति वाच्यम् । अतीषङ्गसर्वप्रष्ठसामादिवदिष्टत्वात् । न च तथा सति **त्रिच्छन्दा माध्यंदिनः पञ्चछन्दाः आर्भव** इत्यादेः क्रतुविशेषेषु विरोधः स्यादिति वाच्यम् । अधीतऋक्छन्दोऽपेक्षया तस्योपपत्तेः । सर्वपृष्ठाप्तोर्यामे आर्भवपवमाने **परिप्रधन्व** (सा.१३६१-६३) इति **स्वर्निधनसौहविषस्य** (ऊ.अ. ५३६) विहितत्वेन पञ्चछन्दस्त्वस्य त्रिच्छन्दस्तस्यैकत्रिके अभावेन तस्य उत्सर्गत्वाच्च। **एकच्छन्दः प्रातः सवन**मित्यादेरभिषेचनीयबहिष्पवमानादौ अभावाच्च । तस्मात् सर्वेषां साम्नां छन्दोऽस्त्येव । तथा च स्मार्तपदार्थानुक्रमण्यां विवाहकर्मणि श्रीधरेण दक्षिणहस्तेन स्पृष्टवत्यां कन्यायां **भूः स्वाहा भुवः स्वाहा सुवः स्वाहेति स्रुवेणाज्यं पतिर्जुहुयात् । अत्रिर्दैवी गायत्र्यग्निः । भृगुर्दैव्युष्णिग्वायुः । कुत्सोऽनुष्टुप् सूर्य** इत्युक्तम् । तथैवास्माभिरनुष्ठीयते । केचित्तु एवंभूतानामृगध्ययनाभावात् छन्दो नास्तीत्याहुः । अत एव छन्दोगसूत्रप्रयोगवृत्तिकृता तालवृन्दनिवासिना *त्रैविद्य*वृद्धेन साग्निचित्यक्रतौ **पुष्करपलाश उपधीयमान** इत्यादिना **सुवरिति त्रिर्गायेत्** इत्यन्तेन व्याहृतिसामानि विधाय ऋक्षु गानाभावात् **छन्दो नास्तीति केचित्। प्रजापतेर्हृदयमुत्तरेऽपि कक्षे अत्र नास्ति च्छन्द इति केचित् । ऋक्षु गानाभावादित्यप्युक्तम्** । यथारुचि विद्वद्भिराश्रयणीयम् । **ये यन्ति प्राञ्चः पन्थानः** (मं.ब्रा.२.६.३) इत्येतन्मन्त्रव्याख्यानसमये *विद्यारण्येन* **न वा एकेनाक्षरेण छन्दांसि**

2. $S^{2}$ ऋचि for इति; A Om. न च यच्छन्दस्कायाम् . . छन्दोऽस्त्येव (vid pp.61 ln.no.18)
13-18. A प्रयोगकृत्रैविद्यवृद्धेन नालवृन्दनिवासिना for प्रयोग . . . त्रैविद्यवृद्धेन।
24. $S^{2}$ अक्षराणि for अक्षरेण।



**वियन्ति न द्वाभ्याम्** (ऐ.ब्रा.१.६) इति बह्वृचब्राह्मणेन यत् छन्दसामाधानमुक्तं तद्विस्मृतपादपरिभाषेणेति ध्येयम् । बह्वृचसर्वानुक्रमण्यपेक्षया वा बह्वृचैस्तु पादपरिभाषा नोक्ता । अत एव **एकद्व्यूनाधिका सैव** (ऋ.प्रा.१७.२) इति *शौनकः*। केचित्तु **न वा एकेनाक्षरेणे**ति ब्राह्मणं पादपरिभाषाकरणमूलम् । अतस्तदेव *विद्यारण्येनोक्त*मित्याहुः ॥ ८॥

**अथापि त्रिपदा भवति मध्येऽष्टाक्षरोऽभितो द्वादशाक्षरौ। तां पिपीलिकामध्येत्याचक्षते ॥ ९ ॥**

**तत्त्व०** :- अन्यापि **त्रिपदा** भवति । कथमित्यत आह - **मध्येऽष्टाक्षरोऽभितो द्वादशाक्षराविति** । स्पष्टम् । यथा - **पर्यूषु प्र धन्ववाजसातये** (सा.४२८) **अनु हित्वा सुतं सोम मदामसि** (सा.४३२) इति ॥

**ताम्** अष्टाक्षरपादमध्याम् अनुष्टुभं **पिपीलिकामध्येत्याचक्षते** ब्रह्मवादिनः । तथा च ब्राह्मणम् **पिपीलिकामध्यासु स्तुवन्ति** (तां.ब्रा.१५.११.८) इति । देवताध्यायेऽपि **पिपीलिका-मध्येत्यौपमिकम्** (दे.अ.ब्रा.3.10) इति। पिपीलिकाया मध्यमिव मध्यं यस्य इत्युपमा। तथाचक्षत इति तदर्थः ॥ ९ ॥

**छन्दो०** - यत्र **मध्ये**ऽष्टाक्षरपादः, आद्यन्तौ द्वादशाक्षरपादौ एवंभूता त्रिपदापि ऋक् भवति। तां पिपीलिकामध्यानुष्टुबिति **आचक्षते**।

2. $S^{2}$ समाधनान्मुक्तं for समाधानमुक्तम्।
4. A Om. केचित्तु . . . विद्यारण्येनोक्तिमित्याहुः।
10. P Om. स्पष्टम्।
15. $S^{2}$ च for अपि।
18. $S^{1-2}$ अष्टाक्षरो भवति for अष्टाक्षरपादः।
19. A trans. आचक्षते after विचितिकाराः।

एतच्छन्दोविचितिकारा इत्यर्थः। अत्राचक्षते इत्यात्मानमेवाचार्याः परोक्षतया निर्दिशन्ति। यथा **आर्षेयमुक्त्वानेकं साम ब्रूयात्** (प्र.सू.२.१४) इति प्रतिहारसूत्रकारः *कात्यायनः* यथा वा **गोनर्दीय आह** (पा.म.१.१.२९) इति महाभाष्यकारः। पिपीलिकामध्यमिवास्या मध्यस्यापि कृशत्वात् **पिपीलिकामध्येत्युक्तम्**। **पिपीलिकामध्येत्यौपमिकम्** (दे.ब्रा. ३.१०) इति देवताध्याये दर्शनात्। **ङ्यापोः संज्ञाछन्दसोर्बहुलम्** (पा.६.३.६३) इति आपो ह्रस्वत्वम्। उदाहरणं तु - **पर्यूषु प्र धन्व वाजसातये** (सा.४२८)। **अनु हित्वा सुतं सोम मदामसि** (सा.४३२) **ऊर्जं वहन्तीरमृतं घृतं पयः** (वा.सं.२.३४, मं.ब्रा. २.३.१५) ॥ १५ ॥

## मध्येज्योतिरिति बह्वृचाः ॥ १० ॥

तत्त्व० इति । तां पिपीलिकामध्यां **बह्वृचा मध्येज्योतिरित्याचक्षते** ॥१०॥

छन्दो० - बह्वृचः ऋचो येषां ते **बह्वृचः** ऋग्वेदिनः। **अनूचो माणवो ज्ञेयो बह्वृचश्चरणाख्यया** (तु.पा.म. ६.४.१५४) इति कब्विधौ वचनात् । ते पिपीलिकामध्यानुष्टुभं मध्येज्योतिरनुष्टुबित्याहुरित्यर्थः । यद्यपि बह्वृचैरपि पिपीलिकामध्यानुष्टबित्येवोच्यते; यथाह शौनकः - **यस्याश्चाष्टाक्षरो मध्ये सा पिपीलिकामध्यमा** (ऋ.प्रा.१६.३९) इति तथापि तस्य शौनकीयस्य शाकलसंहिताविषयत्वात् तद्व्यतिरिक्तशाखाध्यायिनोऽत्र बह्वृचा इति ज्ञेयाः ॥ १० ॥

7. P अपेः for आपो।
14. S[1] बहवो for बह्व्यो
15. S[1-2] चरणाज्ञया for चरणाख्यया
18. A तथा for यथा
20. S[1-2] Om. अत्र



## एष पादो यतो यतः परिक्रामेत् तं ज्योतिषमेनां ब्रुवते। पुरस्ताज्ज्योतिर्मध्ये ज्योतिरुपरिष्टाज्ज्योतिरिरिति ॥ ११ ॥

तत्त्व० - एषोऽष्टाक्षरपादो **यतो यतः** पुरस्तान्मध्य उपरिष्टाद्वा **परिक्रामेत्** तिष्ठेत् तत्र सर्वत्रापि **तं** पादं **ज्योतिषमि**त्याचक्षते। ननु मध्येज्योतिषमेवैनं कथं ब्रुवते इत्यतो नामानि अतिदिशति - **पुरस्ताज्ज्योतिर्मध्येज्योतिरुपरिष्टाज्ज्योतिरिति**। मध्येज्योतिषः पुनरनुक्रमणं पुरस्ताज्ज्योतिरुपरिष्टाज्ज्योतिषोरनुष्टप्त्वार्थम्। उदाहरणं पुरस्ताज्ज्योतिषो मृग्यम्। उपरिष्टाज्ज्योतिषस्तु -

**मा कस्मै धातमभ्यमित्रिणे नो माकुत्रा नो गृहेभ्यो धेनवो गुः। स्तनाभुजो अशिश्वीः** ॥ (ऋ.१.१२०.८) इति ॥ ११ ॥

छन्दो० - **यतो यतः** इति वीप्सायां द्विर्वचनम्। **आद्यादित्वात्** (तु.पा.वा.५.४.४४) **सप्तम्यर्थे** तसिल्प्रत्ययः । **एषः** पादत्रययुक्तानुष्टुभोऽष्टाक्षरपादो यत्र यत्र पुरस्ताद्वा मध्ये वा उपरिष्टाद्वा **परिक्रामेत्** तिष्ठेत् यदि तदा एनाम् अनुष्टुभं **तत् ज्योतिषम्** एतच्छन्दोविचितिकारा आचक्षते इत्यर्थः। तत् पठित्वा दर्शयति **पुरस्तात्**

2. P Om. तं ज्योतिषम् . . . ज्योतिरिति
2. S[1-2] ज्योतिष्मतमित्याचक्षते for ज्योतिषमेनां ब्रुवते
5. P Om. एषो . . . परिक्रामेत्
6. S[1] पदं for पादं
9. P क्रमेण for क्रमणं
9. S[1-2] अनुष्ट्वार्थम्, P अनुष्टुबर्धम् for अनुष्टुप्त्वार्थम्
17. S[1-2] तत् तत् for तत्

ज्योतिरित्यादिना। उदाहरणानि तु पुरस्ताज्ज्योतिः शाखान्तरे। केचित्तु **अनु हि त्वा सुतं सोम** (सा. ४३२)। **ऊर्जं वहन्तीरमृतम्** (वा.सं.२.३.४. मं.ब्रा.२.३.१५) इति च प्रथमः पादोऽष्टाक्षरः। इतरौ- **मदामसि महे समर्यराज्ये। वाजाँ अग्नि पवमान प्र गाहसे** (सा. ४३२)॥ **घृतं पयः कीलालं परिस्रुतम्। स्वधास्थ तर्पयत मे पितॄन्** (मं.ब्रा.२.३.१५)॥ इति पुरस्ताज्ज्योतिरित्याहुः॥ मध्येज्योतिरनुष्टुप् **तु पर्यू षु प्र धन्व वाजसातये** (सा.४२८)। **अनु हि त्वा सुतं सोम मदामसि** (सा. ४३२)। **ऊर्जं वहन्तीः** (वा.सं.२.३४) वचनद्वयप्रामाण्यात् पिपीलिकमध्यानुष्टुभा सह इयं विकल्पिता ज्ञेया।

उपरिष्टाज्ज्योतिरनुष्टुप्- **युञ्जन्ति हरी इषिरस्य गाथया** (सा. ७०६२)। **युञ्जन्तीति** नार्मेधमधिकृत्य प्रवर्तमानम्। **अथ पुर उष्णिगनुष्टुप्। तेनानुष्टुभो नयन्ति** (तां. ब्रा. ८.८.२६) इति ब्राह्मणं तु बाह्वृच्यापेक्षया। पुरउष्णिक् छान्दोग्यापेक्षया अनुष्टुबित्येतत् परमिति द्रष्टव्यम्। एकशाखास्थायामस्यामुभयोरसंभवात्। अत एव षोडशिविचारे *रुद्रस्कन्देन* निदाने भगवानाह बहुवित्तु पतञ्जलिरिति श्लोकार्धमुक्त्वा निदानं तु **पुरउष्णिक् तृतीया दाशतयेनाध्यायेन तां बह्वृच** अधीयते। **युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे। इन्द्रवाहा वचोयुजा** (ऋ.८.९८.९) **तत्र वयं चत्वार्यक्षराणि उपहरामः स्वर्विदेति। सानुष्टुब् भवति उपरिष्टाज्ज्योतिः** (नि.सू.२.११.२१) इत्युक्तम्। अत्र **त्रिपाज्जागताभ्यां गायत्रेण चादौ मध्येऽन्ते वा** (तु.पि.छ.सू.३.२४-२५) इति पाणिन्यनुज *पिङ्गलनाग*वचनात् तन्मते त्वेषानुष्टुबेव। अन्त्याष्टाक्षरपादानुष्टुभं कृतिरिति बह्वृचाः प्राहुः। तदुक्तं तत्सर्वानुक्रमण्यां

1-6. A Om. केचित्तु . . . इत्याहुः
7. A Om. तु
15. A Om. श्लोकार्धम्
19. S[1-2] Om. भवति
20. S[1-2] आद्ये for आदौ
22. S[2] भनतुर् for कृतिर्



**जागतावष्टकश्च कृतिः** (१.६.३) इति। त्रिपदा विराडिति तैत्तिरीयाः। यदाह तत्सर्वानुक्रमणीकारः - **विराड् द्वादशकाभ्यामष्टाक्षरेण चैकेन त्रिपदा** (   ) इति। अत्र **परोक्षमनुष्टुभमुपयन्ति प्रजापतिर्वा अनुष्टुप्** (तां.ब्रा.४.८.९) इत्येतद्ब्राह्मणव्याख्यानसमये भाष्यकारेण **अष्टाक्षरैश्चतुर्भिः पादैः प्रत्यक्षमनुष्टुप् भवति अतोऽन्या द्वात्रिंशदक्षरा परोक्षानुष्टुप्** इत्युक्तम्। तदनुसारेणैव **तं दशमेऽहनि अभ्यस्येत्** (द्रा.श्रौ. ६.२.७) इत्येतत्सूत्रव्याख्यानसमये **पुनरस्मासु दध्यसीति** मन्त्रं तं दशमेऽहनि अभ्यस्येत्। प्रत्यक्षानुष्टुब्निवृत्त्यर्थमिदं **दशमेऽहनि परोक्षमनुष्टुभमुपयन्ति** (तां.ब्रा.४.८.९) इति ब्राह्मणात् प्रत्यक्षानुष्टुभो वर्जनीयाः इति ***धन्विनोक्तम्***। तस्मात् अभ्यासेन प्रत्यक्षानुष्टुप्परिहारेऽपि छन्दोऽन्तरापत्तिर्न भवति। किं तु तदेव विहितमित्यङ्गीकर्तव्यम्॥

ननु बृहद्रथन्तरादिवत् छन्दोऽन्तरापत्तिः स्यादिति चेत्। न। तत्र प्रगाथवचनात्। इह तु तद्वचनाभावात् तदेव विहितमित्यङ्गीकर्तव्यम्। **गायन्ति त्वा** (सा. १३३८-४०= अ.द.२०८) इत्युद्वंशीयवत्। तस्य पादाभ्यासेऽप्यनुष्टुप्छन्द एव भवति। कुतः। योनौ यान्यभ्यासेन अन्यच्छन्दः संपद्यन्ते। यथा **गौरीवितौदलकौत्सत्रैककुभ-वैखानसानीतिवत्** *द्राह्यायणोक्त*विशेषवचनाभावात्॥

2. A तद् for यद्
7. S[1-2] सूत्रस्य for सूत्र
8. A मन्त्रान्त for मन्त्रान्तं
10. A अत्र for तस्मात्
11. A Om. अपि, S[1] हरोऽपि for हारेऽपि
11. S[1-2] अस्ति for भवति
11. S[1-2] Om. किन्तु
13-14. A Om. ननु . . . अङ्गीकर्तव्यम्
15. S[1-2] उद्वंशीयस्य for उद्वंशीयवत्
16. A Om. कुतः

ननु **हारिवर्णं भवति** (तां.ब्रा.८.९.१) इत्यत्र ब्राह्मणे उद्वंशीयमधिकृत्य **पाङ्क्तं वा एतत्साम** (तां.ब्रा.८.९.१९) इति विशेषश्रवणात् कथमुद्वंशीयेत्यस्याः अनुष्टुप्त्वमिति चेत्। उच्यते। ब्राह्मणे **देवा वा अग्निष्टोममभिजित्य** (तां.ब्रा.८.८.१) इत्यादिना साकमश्वसौभरनार्मेधानि त्रीण्युक्थसामानि विधाय पुनर्**हारिवर्णं भवति** (तां.ब्रा.८.९.१) इत्यादिना हारिवर्णोद्वंशीयाष्टादंष्ट्रद्वयानि चत्वारि सामानि विहितानि। तत्र हारिवर्णं सौभरेण सह विकल्प्यते। तयोरेकच्छन्दस्त्वात्। तत्तु **एकं छन्दः ककुबुष्णिहौ** (ष.ब्रा.१.३.१२) इति श्रुतेः। उद्वंशीयमाष्टादंष्ट्रे च नार्मेधेन सह विकल्प्यन्ते। **उक्थ्योत्तमेऽनुष्टुभो न्याय्याः** (द्रा.श्रौ.१८.१.२) इति द्राह्यायणवचनात्। अत एव क्षुद्रकल्पसूत्रे **अथात उक्थ्यान्तस्यैव भवत उद्वंशीयाच्छावाकसाम्नः** (१.५) इति क्रतुविधौ **साकमश्वं हारिवर्णमुद्वंशीयमित्युक्थानीति** सौभरस्थाने हारिवर्णम्, नार्मेधस्थाने उद्वंशीयं च विहितम्। तत्र कल्पभाष्यकारेण एवमेव व्याख्याय अनुष्टुभामन्तिमाः पादाः अभ्यस्यन्ते इत्युक्तम्॥

ननु **हारिवर्णं भवति** (तां.ब्रा. ८.९.१) इत्यत्र उद्वंशीयमधिकृत्य **पाङ्क्तं वा एतत्साम पाङ्क्तो यज्ञः** (तां.ब्रा.८.९.१९) इति श्रवणाच्च। **उक्थ्योत्तमेऽनुष्टुभो न्याय्याः । विच्छन्दसस्तु वचनात्** (द्रा.श्रौ.१८.१.२.३) इति ***द्राह्यायण***वचनाच्च पङ्क्तिच्छन्दो भवतीति

3. $S^{1-2}$ Om. कथम्
3. A Om. उद्वंशीयेत्यस्याः
11. $S^{1-2}$ सूत्रेण for सूत्रे
12. $S^{1-2}$ अत्र for क्रतुविधौ
12. A हारिवर्णम्, नार्मेधस्थाने
13. A Om. च
14. A उक्त्वा for व्याख्याय
16. A Om. ननु . . . इत्यत्र
17. A Om. पाङ्क्तो . . . तत्र



चेत्। उच्यते। तत्र पङ्क्तिश्रवणं पङ्क्तिपादसाम्यात् गौणमेव न मुख्यम्। **विच्छन्दसस्तु वचनात्** (द्रा.श्रौ.१८.१.३) इत्यस्य प्रकृतौ विच्छन्दस्त्वमिति धन्विना व्याख्यातत्वाच्च। अत एव **आ त्वा विशन्त्विन्दवः** (सा १६५४-६६) इत्यत्र **अधीतोद्वंशीयस्य** (ऊ.स.७१९) अनुष्टुप्त्वसंपादनार्थम् ऊहे अन्तिमपादः सकृदभ्यस्य अधीयते। **अनभ्यासस्तु तच्छन्दसाम्** (पु.सू.८.८.७) इति पुष्पवचनात् पुनर्नाभ्यस्यते। **इन्द्र सुतेषु** (सा.७४०-४२=ऊ.स.७२०) इत्यस्यास्तु चतुरक्षराभ्यासः क्रियते। एतावतैवानुष्टुप्त्वसंभवात्। तस्मादनुष्टुबेव भवति। न तु पङ्क्तिः। योनौ **यान्यभ्यासेन** (द्रा.श्रौ.२०.४.२५) इत्यादिवद् विशेषवचनाभावाच्च॥

ननु प्रकृतौ विच्छन्दस्त्वमिति धन्विनोक्तमसङ्गतमेव। प्रत्यक्षश्रुतिविरुद्धत्वात्। तस्मात् प्रत्यक्षश्रुतौ पाङ्क्तमिति श्रवणात् पङ्क्तिच्छन्द एव भवतीति चेत्। उच्यते। यदत्र युक्तं तत् सामगाः प्रष्टव्याः।

**ननु आप्यायस्वेत्येतया गायत्र्या। तां तृतीयसवने द्विर्ब्रूयुः।** (द्रा.श्रौ.५.१.११.१२) इत्यत्र **जगतीसंपत्त्यर्थमिति** *धन्विनोक्तम्*।

1. $S^{1-2}$ पञ्चपाद for पङ्क्तिपाद
1. A after मुख्यम् ins. उक्थ्योत्तमेऽनुष्टुभोन्याय्या
4. A Om. भवति
5. $S^{1-2}$ अभ्यस्यते for अभ्यस्य
6. $S^{1-2}$ Om. अधीयते
6. A Om. पुष्प
8. $S^{1-2}$ अधीयते। तावतैवानु for क्रियते एतावतैवानु
8. $S^{2}$ अनुष्टुप्त्वम् for अनुष्टुब
9. $S^{2}$ Om. न तु पङ्क्तिः
10. S Om. आदिवत्
14. $S^{1}$ ब्रूयात् for ब्रूयुः
15. A. after अत्र adds : धन्विना
15. A Om. धन्विना

शक्त्यादीनां रात्रिपर्यायसाम्नां पादाभ्यासेन अनुष्टुप्त्वं भवति । एतानि कथम् । *द्राह्यायणोक्त*विशेषवचनाभावादिति चेत् । उच्यते । प्रगाथव्यतिरिक्तानां पादाभ्यासेन छन्दोऽन्तरापत्तिरनापत्तिर्वा ब्राह्मणकल्पप्रभावसूत्राद्यनुरोधेनाव- गन्तव्या । ब्राह्मणादिकं तु संशयच्छन्दोनिर्णये **चतुष्टयेन च्छन्दो जिज्ञासेत** (नि.सू.१.६.७) इत्यत्र वक्ष्यामः ॥ ११ ॥

**षट्त्रिंशदक्षरा बृहती चतुष्पदैव ॥ १२ ॥**

तत्त्व० - अनुष्टबपेक्षया पादाधिक्यव्यवच्छेदार्थ एवकारः । अत्र प्रथमः पादो द्वादशाक्षरो भवति । इतरे त्रयोऽष्टाक्षराः । एवं सति बृहतीत्युच्यते । तथा च *पिङ्गलनागः* - **बृहती जागतस्त्रयश्च गायत्राः** (पिं.छ.सू.३.२६) । **पथ्या पूर्वश्चेत्तृतीयः** (पिं.छ.सू.३.२७) इति । उदाहरणम् -

**अकर्मा दस्युरभि नो अमन्तुरन्यव्रतो अमानुषः ।**
**त्वं तस्यामित्रहन् वधर्दासस्य दम्भय ॥** (ऋ.१०.२२.८) इति ।

इयमेव पुरस्ताद्बृहतीति वक्ष्यते ॥ १२ ॥

छन्दो० - पादचतुष्टयवती बृहती भवति ॥ १२ ॥

तत्त्व० - पथ्याबृहत्याः पादस्थितिमाह-

1. A Om. भवति
2. A Om. द्राह्यायणोक्तविशेषवचनाभावात्
2. $S^1$ विषय for विशेष
4. A सारेण for रोधेन
4. $S^1$ ब्राह्मणानां for ब्रह्मणादिकं
5. Om. संशयच्छन्दोनिर्णये
8. P च्छेदार्थम् for च्छेदार्थः



**त्रयोऽष्टाक्षरा उपोत्तमो द्वादशाक्षरस्तां पथ्येत्याचक्षते ॥ १३ ॥**
**अपि च स्कन्धोग्रीवीति च ॥ १४ ॥**

यदि द्वादशाक्षरः पाद **उपोत्तमो** भवति प्रथमद्वितीय-चतुर्थास्त्रयोऽष्टाक्षरास्तां पथ्यां बृहतीं **स्कन्धोग्रीवी**त्याचक्षते इति । बृहतीष्वियमेव पथ्या भवति । न पूर्वोक्तेति भावः । यथा- **यज्ञायज्ञा वो अग्नये** (सा. ३५) इति ॥ १३-१४ ॥

छन्दो० - पादाश्च, प्रथमद्वितीयौ अष्टाक्षरौ तृतीयो द्वादशाक्षरः चतुर्थोऽष्टाक्षरः । एवंभूता षट्त्रिंशदक्षरा चेदक्षरैः पूर्णा बृहती भवति । **तं वो दस्ममृतीषहम्** (सा.२३६)। **अभि त्वा शूर नोनुमः** (सा. २३३) । **त्वामिद्धि हवामहे** (सा.२३४) ॥

एनां बृहतीमेव पथ्येति केचित् आचक्षते इत्यर्थः । यथाह यजुर्वेदसर्वानुक्रमणीकारः - **तृतीयो द्वादशाक्षरः पथ्या** ( ) इति ॥१३॥

एषा बृहती **स्कन्धोग्रीवी**त्यपि भवति । अस्याः बृहत्याः मतभेदेन चतस्रः संज्ञा विहिताः । तदुक्तं **षड्गुरुशिष्येण**-

**ऋषीणां मतभेदो हि नामभेदेऽस्ति कारणम् ।**
**पिङ्गलस्य मते चैवं महर्षेर्न्यङ्कुसारिणी ॥**
**स्कन्धोग्रीवी क्रौष्टुकेश्च यास्कस्योरो बृहत्यपि ।**

(ऋ.अ. वेदार्थदीपिका १.७.३) इति ॥ १४ ॥

8. A तृतीयो द्वादशाक्षरः । अन्ये त्रयो अष्टाक्षराः, $S^2$ प्रथमद्वितीयचतुर्था अष्टाक्षराः। तृतीयो द्वादशाक्षरः for पादाश्च . . . चतुर्थोऽष्टाक्षरः
12. $S^{1-2}$ एतां for एनां
15. A भवन्ति for विहिता

**अथ यत्र प्रथमो द्वादशाक्षरः**
**सा पुरस्ताद्बृहती ॥ १५ ॥**

तत्त्व० - स्पष्टम् । उदाहरणं पूर्वोक्तम् ॥ १५ ॥

छन्दो० - यत्र प्रथमो द्वादशाक्षरपादः अन्ये त्रयोऽष्टाक्षराः सा पुरस्ताद्बृहती भवति। **अभि वो वीरमन्धसो मदेषु गाय** (ऋ.८.४६.१४; सा.२६५) । इमां त्रयोदशाक्षरोऽष्टाक्षरस्त्रयोदशाक्षरश्चेति क्रमेण पादान् कृत्वा पिपीलिकामध्या बृहतीति बह्वृचाः । यथाह *शौनकः* -

**त्रयोदशाक्षरौ च द्वौ मध्ये चाष्टाक्षरो भवेत् ।**
**अभि वीरमित्येषा सा पिपीलिकमध्यमा ॥**
(ऋ.प्रा.१६.५२) इति ॥ १५ ॥

**यत्र द्वितीयः सोरोबृहती ।**
**सैव न्यङ्कुसारिणीति ॥ १६ ॥**

तत्त्व० - इति । यत्र ऋचि द्वादशाक्षरः पादो **द्वितीयो** भवति **सोरोबृहती** स्कन्धग्रीवीति चोच्यते । उदाहरणम् - **मत्स्यपायि ते महः** (सा. १४२६) इति ॥ १६ ॥

छन्दो० - यत्र **द्वितीयो** द्वादशाक्षरपादः अन्ये त्रयोऽष्टाक्षराः **सोरोबृहती न्यङ्कुसारिणी बृहती** चेति संज्ञाद्वयमेव भजते । उदाहरणम् - **मत्स्यपायि ते महः** (सा.१४२६) । इमां स्कन्धोग्रीवी उरोबृहती न्यङ्कुसारिणी चेति बह्वृचाः प्राहुः । यथाह *शौनकः* - **द्वितीये न्यङ्कुसारिणी । स्कन्धोग्रीव्युरोबृहती त्रेधैनां प्रतिजानते** (ऋ.प्रा.१६.४६) इति । तैत्तिरीयास्तु - स्कन्धोग्रीवी क्रोष्टुका च उरोबृहती चेति प्राहुः । यथाह तत्सर्वानुक्रमणीकारो यास्कः - **द्वितीयश्चेत् स्कन्धोग्रीवी क्रोष्टुकोरोबृहती वा स्यात्** । (      ) इति ॥ १६ ॥

7. S[1-2] after बह्वृचाः adds : आहुः
11. S[1-2] after द्वितीयः adds : पादः
16. S[1-2] आद्योऽष्टाक्षरः पादः द्वितीयो द्वादशाक्षरः अपरौ चाष्टाक्षरौ for द्वितीयो . त्रयोष्टाक्षराः
17. A after बृहती adds : च
17. S[1] इति च for बृहती
17. S[2] वा for चेति
17. A Om. उदाहरणम्



**यत्रोत्तमः सोपरिष्टाद्बृहती ॥ १७ ॥**

तत्त्व० - स्पष्टम् । यथा - **विश्वाः पृतनाः** (सा.९२५) इति । **नेमिं नमन्ति चक्षसा** (सा. २८१) इति द्वे ऋचौ ॥ १७ ॥

छन्दो० - स्पष्टोऽर्थः । **य एक इद्विदयते** (सा. ३८९) इति त्रैककुभं साम अभ्यासेनोत्तमपादस्य द्वादशाक्षरत्वात् **योनौ यान्यभ्यासेनान्यच्छन्दः संपद्यन्ते । यथा गौरीवितौदलकौत्सत्रै-ककुभवैखानसानि** (द्रा.श्रौ.२०.४.२३) इति *द्राह्यायण*वचनात्। इमान्यप्युदाहरणानि - **नेमिन्नमन्ति चक्षसा** (सा.९२५) । **समुरेभासो अस्वरन्** (सा.९२६) । **न तमंहो न दुरितम्** (सा.४२६) । **नेमिन्नमन्ती**त्यस्याः ऋचः **सुदीतयो वो अद्रुहः** इति तृतीयपादः, **अपि कर्णे तरस्विनः समृक्वभिः** इत्युत्तमः पादः कुतः? उच्यते । **पादान्त्यात् परःस्वरो विकृष्यते** (पु.सू.६.१७९) इति पुष्पानुसारेण **अपि कर्णे** इत्यकारं विकृष्य **अपा३कऽ२३४र्णे** (ऊ.द.७३) इत्यूहे अध्ययनात् । **कावे आधीऽ३त्रा३पा** (ऊ.द. १३) । **औध्वंसद्मने अयऽंणायतेसुत**

3. A त्रैकधानां for त्रेधानां
6. A after इति adds संज्ञाद्वयमेवकारेण त्ववच्छिद्यते
10. A यत्र त्रयोऽष्टाक्षरपादाः उत्तमो द्वादशाक्षरपादः सा उपारिष्टात् बृहती भवति for स्पष्टोऽर्थः
17. S[1-2] after कुतः add एतत् ।
18. S[2] परि for पदः ।

**उवा**ऽ२३**होइ** (ऊ.द.२३) इतिवत्। किं च अद्रुह इति होशब्दस्य पादान्त्यत्वात् एव तदुपर्यकारं हित्वा **सुदीतयो वो अद्रुहो**ऽपि **कर्ण** इति ऋक्पाठाच्च। यदि पादमध्यः स्यात् तदा **एङः पदान्तादति** (पा.६.१.१०९) इति [प्राप्ते] पूर्वरूपापवाद [रूपेण] **प्रकृत्यान्तः पादमव्यपरे** (पा.६.१.११५) इति व्याकरणसूत्रेण पादमध्यगतात् पदान्तात् एकारादोकाराच्च परस्य अकारस्य पृथक् श्रवणरूपप्रकृतिभावविधानात् **सुदीतयो वो अद्रुह** इतिवत् **अद्रुहो**ऽपि **कर्ण** इत्यत्रापि अकारं पृथक् कृत्य ऋक्पाठः स्यात्। तथा नाधीयते। **समु रेभास** (सा.९२६) इत्यस्या ऋचः **स्वः पतिर्यदि वृधे** इति तृतीयः पादः। न तु **वृधे धृतव्रत** इति। कुतः? **भक्तिमध्यः पादमध्यश्चास्तोभे प्रत्यये संध्यगीतः सर्वत्र, पदगीतं वक्ष्यामः**। देवः **प्रत्युत्क्रान्त ऐडयास्य द्वितीयायाम्** (पु.सू.६.४३-४५) इत्यादौ **धृतव्रतस्त्रैशोके** इति पादमध्यमङ्गीकृत्य पदगानविधानात्। तस्मात् **नेमि नमन्ति** (सा.९२५) **समु रेभासः** (सा.९२६) इत्युभयो ऋचोरुत्तमपादो द्वादशाक्षरपाद एव भवति। **न तमहो न दुरितम्** (सा.४२६) इत्यस्या ऋच उत्तमः पादः **मित्रो न याति वरुणो अति द्विषः** इति द्वादशाक्षरपाद एव॥

ननु अस्या ऋचः पङ्क्तिप्रकरणे पाठात् **आचतुरताया इत्येके** (नि.सू.१.१.७) इत्यष्टाक्षरपादपरिभाषया च **अतिद्विष** इत्युत्तमपादात्

---

2. $S^{1}$ विश्लिष्य, $S^{2}$ विश्लिष्ट for हित्वा।
5. A पादभूतात्, $S^{2}$ पादमध्यगततत्पादपादान्तात् for पादमध्यगतात् पदान्तात्
7. A Om. रूपः।
8. $S^{1-2}$ Om. ऋक्।
11. A संधिगीतः for संध्यगीतः।
13. $S^{2}$ पतद्गान for पादगान।
13. A Om. नेमिं . . . for रेभास इति।
14. A Om. ऋचोः।



पङ्क्तिः किं न स्यात् इति चेत्। उच्यते। पङ्क्तिर्न भवति। एवं पादच्छेदासंभवात्। कथं यदि **पूर्वोक्तप्रकृत्यान्तः पादमव्यपरे** (पा.६.१.११५) इति व्याकरणेन पादमध्याकारस्य प्रकृतिभावविधानात् (नम्?)। अत एव **वरुणो** इत्योकारात् परस्य अकारस्य पादमध्यत्वमङ्गीकृत्य ऋगध्ययने पृथक्पाठात् (ठः?)। तस्मात् द्वादशाक्षर एव भवति। अत एव ***शौनकेन***-

**अष्टाक्षरास्त्रयः पादा उत्तमो द्वादशाक्षरः।**
**उपरिष्टाद्बृहत्येषा नतमंह उदाहृतिः॥ (  )**

इत्युक्तम्॥ १७॥

**अथापि चत्वारो नवाक्षरा इत्युदाहरन्ति।**

**उपेदमुपपर्चनम्** (ऋ.६.२८.८) इति॥ १८॥

तत्त्व० - अन्यापि बृहती भवति। कथम्? **चत्वारो नवाक्षराः पादा** इति -

**उपेदमुपपर्चनमासु गोषूप पृच्यताम्।** (ऋ.६.२८.१) इति सूत्रपठितानि तत्राक्षराणि विकर्षेण गणनीयानि॥ १८॥

छन्दो० - नवाक्षरयुक्ताः **पादाश्चत्वारो** यत्र सापि बृहती भवति। स्वयमेवोदाहरति- **उपेदमुपपर्चनम्** (द्रा.श्रौ.७.३.४) इति एतच्छन्दोगसूत्रे। अत्र **उप इदं प्रचीयताम् उप ऋषभस्य उप इन्द्र तव वीरिय** इति विकृष्य पादानां नवाक्षरत्वं द्रष्टव्यम्। अक्षरविकर्षप्रकारस्तु

---

2. $S^{1-2}$ Om. यदि।
4. A Om. अत एव।
5. A मध्यम् for मध्यत्वम्।
12. $S^{1-2}$ before कथम् add : बृहती
18. A Om. अत्र

द्वितीयपटले **चत्वारि सन्धि** (नि.सू.२.३.४१९) इत्यादिना वक्ष्यते। एषां पदानां व्यूहेन नवाक्षरत्वं *शौनकेनाप्युक्तम्*।

**द्वयोश्चोपेदमाहार्षं सर्वे व्यूहे नवाक्षराः** (ऋ.प्रा.१६.५१)। इति। **उपेदमित्यस्या अनुष्टुप्शङ्काव्यावृत्त्यर्थमुदाहृतमिति द्रष्टव्यम्**। बाह्वृचेऽप्युदाहरणम् - **तं त्वा वयं पितो वचोभिः** (१.१८७.११) [इति] ॥ १८ ॥

**अथापि त्रिपदा भवति द्वादशाक्षरपादा।**
**प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यम्** (सा.१४९४)
**इति॥ तां सतोबृहतीत्याचक्षते** ॥ १९ ॥

तत्त्व० - स्पष्टम्। तथा च ब्राह्मणम् - **प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यम् इति सतोबृहत्यो भवन्ति** (तां.ब्रा.१६.१८) इति॥ १९ ॥

छन्दो० - पादत्रयवती बृहती भवति। पादाश्च द्वादशाक्षराः। तां बृहतीं **सतोबृहतीति** एतच्छन्दोविचितिकारा वदन्तीत्यर्थः। आहतुः *पिङ्गलनाग*यजुर्वेदसर्वानुक्रमणीकारौ। तद्यथा - **सतोबृहती ताण्डिन इति। ऊर्ध्वबृहतीति बह्वृचाः** (पिं.छ.सू.३.३६)। तदुक्तं तत्सर्वानुक्रमण्याम् (१.७.४) **त्रिजागतोर्ध्वबृहतीति महाबृहतीति तैत्तिरीयाः**। यथाह सर्वानुक्रमणीकारः **त्रिभिर्द्वादशकैर्महाबृहतीति**। *पिङ्गलनागेना*प्युक्तम् - **त्रिभिर्जागतैर्महाबृहती** (पिं.छ.सू.३.३५) इति। स्वयमेवोदाहरति **प्रत्नं पीयूषम्** (सा.१४८८) इति तृचमेवोदाहरणम्। साहस्रोत्तमे क्रतौ **प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यम् इति सतोबृहत्यो भवन्ति** (तां.ब्रा.१६.११.८) इति बहुवचनश्रुतेः। स्वयमेवोदाहृतं तु मध्यमायां विराट्शङ्कानिवृत्त्यर्थम्॥

20. S[1-2] Om. क्रतौ
21. S[1-2] Om. बहुवचन



ननु **प्रत्नं पीयूषमित्यधिकृत्य चयनक्रतौ तैत्तिरीयकं सूत्रम् सतोबृहतीषु स्तुवते। व्यतिषक्ताभिस्तुवते इति** (   ) इति। कथम्? तन्मते महाबृहतीत्वादिति चेत्। उच्यते। स्तवनस्य विधेयत्वात् तस्य सामाधीनत्वेन सामच्छन्दोभिर्व्यवहारः कृत इति ध्येयम् ॥१९॥

**बार्हतमपि तृचं सतोबृहत्य इत्याचक्षते।**
**यथा वयं घ त्वा सुतावन्तः** (सा.२६१) इति॥ २० ॥

तत्त्व० - **बार्हतं** बृहतः संबन्धि **तृचम्** एकस्तोत्रसाधनीभूतम् ऋक्त्रयमपि सतोबृहत्य इत्येवाचक्षते इति। यथा - **वयं घत्वा सुतावन्तः** (सा.२६१) इति। तथा च ब्राह्मणम्- **वयं घत्वा सुतावन्त इति सतोबृहत्यो वर्षीयच्छन्द आक्रमते** (तां.ब्रा.१२.४.३; १४.४.१) इति। **आत्वा सहस्रमा शतम्** (सा. २४५) **कईं वेद सुते सचा** (सा.२९७) इति चोदाहरणम्॥ २० ॥

*इति (श्रीतातप्रसादकृतायां **तत्त्वसुबोधिन्यां**) निदानसूत्रवृत्तौ प्रथमपटले द्वितीयः खण्डः ॥ २ ॥*

**छन्दो** - तिस्रो ऋचः यस्मिन् समुदाये स तृचः। **ऋचि त्रेरुत्तरपदादिलोपच्छन्दसि** (पा.वा.६.१.३७) इति ऋकारलोपः संप्रसारणं च। **छन्दोवत् सूत्राणि भवन्ति** (पा.म.१.१.१) इति वैयाकरणाः। बृहतीसंबन्धितृचमपि सतोबृहत्य इत्येवाचक्षत इत्यर्थः। एतदुक्तं भवति। यस्मिंस्तृचे तिस्रः ऋचो बृहत्यो भवन्ति तत्रत्याः बृहत्यः इति सतोबृहत्य इति। तथा च ब्राह्मणे **वयं घत्वा सुतावन्त इति सतोबृहत्यो भवन्ति**। (तां.ब्रा.१२.४.३) इति बहुवचनम्। गवामयने प्रधानसूत्रं च - यथा- **सातोबार्हतास्तृचास्तेषामेकैकं तृतीयेऽहनि**

3. A व्रतत्वात् for बृहतीत्वात्
4. S[1] तस्यासाम for तस्य साम।
22. S[1-2] द्राह्यायण for प्रधान

**कुर्यात्** (ला.श्रौ.१०-६-६) इति **सातोबार्हतशेषोऽष्टौ** (द्रा.श्रौ.२९.१.१३) इति च। स्वयमेवोदाहरति - **वयं घत्वा सुतावन्त** (सा.८५८) इति। स्वेनैवोदाहृतं तु बृहतीतृचस्थस्योदाहरणार्थम्। अन्यथा **परीतोषि** (सा.१६०७) **अभिसो** (सा.८५०) -साध्यासंस्थबृहत्योः सतोबृहतीत्वं स्यात्। इदमप्युदाहरणम्- **क ईं वेद सुते सचा** (सा.१६९०) इति। यत्तु *द्राह्यायणः*। **द्वौ तस्यां चैवादितश्च सा शशकर्णक्लृप्ता**। (द्रा.श्रौ. १६.३.१९.२०) इति अस्यार्थः। माध्यंदिने पवमाने यदि द्वावेकर्चौ तदा साध्यासायां बृहत्याम् आदितोऽध्यासायां च एकर्चकरणम्। मध्ये त्रिकर्चकरणमिति। तथा च निदानकारः **तृचप्रथमायामेकर्चं कृत्वा तस्मिन्नेव तृचे द्वे तृचस्थे अध्यासायामन्तमेकर्चं तां शशकर्णक्लृप्तेत्याचक्षते** (नि.सू.६.३.११) इति। तद्यथा वाजपेये माध्यंदिने पवमाने **परीतोषिञ्चता सुतम्** (सा.१३०७-८) इति **समन्तं प्रथमायाम्**। **दैर्घश्रवसं तिसृषु**। **देवस्थानं तिसृषु**। **श्रीणन्त** (सा.१३०८-९) इति **यौधाजयमध्यास्यायाम्** (आ.क.४.१३)। एवं भूतायां साध्यासायां बृहत्यामादितोऽध्यायां च साम्नोरेकर्चकरणात् मध्ये तृचकरणात् यथा शशकर्णौ मध्यतस्थूल आदितोऽग्रतश्चाणीयान् एवमेषा बृहत्यपि शशकर्णक्लृप्तेत्युच्यते। एषा तु यथासंभवं माध्यंदिने पवमाने साध्यासायां बृहत्यामुक्तरीत्या स्तोत्रीयाष्टकविधाने गौरवं स्यादिति लघूपायेन विधानार्था। व्याकरणे प्रत्याहार वृद्ध्यादिसंज्ञावत्। न तु छन्दः। छन्दोविचितौ तल्लक्षणाभावात्। अत एव कल्पसूत्रे षष्ठाध्यायान्त्यखण्डे **बैदत्रिरात्रे तस्य शशकर्णक्लृप्ता बृहती** (आ.क.६.३२.१) इति प्रधानसूत्रे चाष्टमपटले **नित्यौ च शशकर्णौ** (द्रा.श्रौ.८.२.८) इति।

---

1. S[1] अष्टाविंशतिः for अष्टौ

7. A दिन for दिने

19. A उक्तवत्याः स्तोत्रीयाष्टकविधानसूत्र for उक्तरीत्या स्तोत्रीयाष्टकविधाने

21. A षष्ठाध्यायान्त्ये for षष्ठाध्यायान्त्यखण्डे।



तदुक्तं वाजपेयक्लृप्तौ तालवृन्तनिवासिना शशकर्णक्लप्ता बृहतीति **सर्वत्र व्यवहारार्थम्**। तत्र कल्पकारस्तस्य शशकर्णक्लृप्ता बृहती (आ.क.६.३२.१) इति। **सूत्रकार आह नित्यौ च शशकर्णावित्येवं व्यवहारार्थमिति**। अत एव बृहतीच्छन्द इत्येव सर्वत्र व्यवहारः॥ २०॥

*इति तञ्जावूरुग्रामनिवासिना पेत्ताशास्त्र्यपराभिधानेन हृषीकेशशर्मणा विरचितायां छन्दोविचितिवृत्तौ* प्रथमे पटले द्वितीयः खण्डः॥ २॥

✿ ✿ ✿

# तृतीयः खण्डः

**चत्वारिंशदक्षरा पङ्क्तिः पञ्चपदाष्टाक्षरपादा ॥ १ ॥**

तत्त्व० - स्पष्टम्। यथा - स्वादोरित्था विषूवतः (सा.४०९) इति॥ १॥

छन्दो० - अष्टाक्षरपादपञ्चकवती पङ्क्तिर्भवति । सा चत्वारिंशदक्षरा चेत् अक्षरैः पूर्णा भवति । आते अग्न ऋचा हविः (सा.१०२३)। इन्द्रो मदाय वावृधे (सा.४११)। स्वादोरित्था विषूवतः (सा.४०९)। पथ्याच्छन्द इति तैत्तिरीया वदन्ति। यथाह तत्सर्वानुक्रमणीकारः पथ्या पञ्चभिरष्टाक्षरैः ( ) इति॥ १॥

**अथापि चतुष्पदा भवति। द्वादशाक्षरोऽष्टाक्षर इति व्यत्यासः ॥२॥**

तत्त्व० - चतुष्पदापि पङ्क्तिर्भवति। तस्या द्वौ पादौ द्वादशाक्षरौ द्वावष्टाक्षरौ। तेषां चतुर्णामपि द्वादशाक्षरोऽष्टाक्षर इति व्यत्यासः कार्यः॥२॥

**तां सिद्धविष्टारपङ्क्तिरित्याचक्षते ॥ ३ ॥**

तत्त्व० - एवं व्यत्यस्तपादां सिद्धाविष्टारपङ्क्तिरित्याचक्षते इति। यथा - न त्वावा२ँ अन्यो दिव्यो न पार्थिवः (सा.६८१) इति॥ ३॥



छन्दो० - अथापि . . . आचक्षते॥ इति। इति शब्दः प्रकारे द्वादशाक्षरोऽष्टाक्षर इति । अनेन प्रकारेण पादानां व्यत्यासो यत्र सा चतुष्पदा भवति। एतदुक्तं भवति। प्रथमतृतीयौ द्वादशाक्षरौ। द्वितीयचतुर्थौ अष्टाक्षराविति। तां सिद्धविष्टारपङ्क्तिरिति छन्दोगा आचक्षते इत्यर्थः। अत्र छन्दोनाम्नि च (पा.८.३.९४) इति षत्वम्। न त्वा वामन्यो दिव्यो न पार्थिवः (ऋ.७.३२.३४) यस्य ते पीत्वा वृषभो वृषायते (ऋ.९.१०८.२)। ऊर्जोनपात् जातवेदः सुशस्तिभिः (ऋ.१०.१४०.३)। इरज्यन्नग्ने प्रथयस्व जन्तुभिः (ऋ.१०.१४०.४)। इष्कर्तारमध्वरस्य प्रचेतसम् (ऋ.८.९९.८)। इमाः सतोबृहतीति बह्वृचाः प्राहुः । यथाह तत्सर्वानुक्रमणीकारः - अयुजौ जागतौ सतोबृहती (ऋ.अ.१.८.४) इति। अतः स एवोर्जोनपादिरज्येष्कर्तारमिति तृचमधिकृत्य तिस्रः सतो बृहत्य इति चावदत्। सतः पङ्क्तिरिति तैत्तिरीयाः। यथाह तत्सर्वानुक्रमणीकारः अयुजौ चेत् द्वादशाक्षरपादौ सतःपङ्क्तिरिति॥ २-३॥

**विपर्यासे विपरीता स्यात् सैव ॥ ४ ॥**

तत्त्व० - उक्त पादव्यत्यासे विपर्यासे सति अष्टाक्षरो द्वादशाक्षर इति सैव विष्टारपङ्क्तिर्विपरीता सिद्धाविष्टारपङ्क्तिर्भवति। यथा-

य ऋष्वः श्रावयत्सखा विश्वेत्स वेद जनिमा पुरुष्टुतः।
तं विश्वे मानुषा मृगेन्द्रं हवन्ते तविषं यतस्रुचः॥
(ऋ.८.४६.१२) इति॥ ४॥

छन्दो० - एवकारो भिन्नक्रमः विपरीतेत्यत्र संबध्यते । यत्र सिद्धाविष्टारपङ्क्तौ क्रमेण विद्यमानानां चतुर्णां पादानां विपर्यासे व्यत्यासे

---

2. S[1-2] क्रमेण for प्रकारेण
9. A इमां for इमाः; A Om. प्राहुः
16. S[1-2] Om. सिद्धा

सति **विपरीतैव सा** भवति। न तु विपरीता पङ्क्तिः। यदि विपरीता पङ्क्तिः स्यात् तदा सिद्धाविष्टारपङ्क्तिरास्तारपङ्क्तिरित्यादिवत् विपरीतापङ्क्तिरिति विशिष्य ब्रूयात्। विपरीतेति बह्वृचतैत्तिरीयैरप्युच्यते। यथाह *शौनकः* - **विपरीता विपर्यये** (ऋ.प्रा.१६.५८) इति। यजुर्वेदसर्वानुक्रमणीकारश्च **युजौ चेद्विपरीतेति**। अत्र विपर्यासो नाम प्रथमतृतीयावष्टाक्षरौ द्वितीयचतुर्थौ द्वादशाक्षराविति। उदाहरणं बह्वृचे - **य ऋष्वः श्रावयत्सखा** (ऋ.८.४६.१२)॥४॥

## अथ यत्र पूर्वावष्टाक्षरावुत्तरौ द्वादशाक्षरौ सास्तारपङ्क्तिः। आस्तीर्णाविवैतौ पङ्क्तिपादाविति॥ ५॥

तत्त्व० - आस्तारपङ्क्तिलक्षणमाह - अथेति **यत्र** ऋचि **पूर्वौ** प्रथमद्वितीयौ पादौ **अष्टाक्षरौ, उत्तरौ** तृतीयचतुर्थौ **द्वादशाक्षरौ सा** आस्तारपङ्क्तिरिति। उदाहरणम् - **अग्निं न स्ववृक्तिभिः** (सा.४२०) इति॥

अत्र हेतुवादमाह आस्तीर्णाविति। एतौ द्वादशाक्षरपादौ परतः आस्तीर्णाविव। तदुक्तं *पिङ्गलनागेन* द्वादशाक्षरपादौ परतः अस्तीर्णाविव। तदुक्तं *पिङ्गलनागेन* द्वादशाक्षरावित्यनुवर्तमाने अस्तारपङ्क्तिः परतः **स्तीर्णौ** (पिं.छ.सू.३.४०) इति। **इति** हेतौ। ततो हेतोरित्यर्थः। उदाहरणम् **आग्निं न स्ववृक्तिभिः** (सा.४२०) इति॥५॥

2. S[2] after पङ्क्तिरिति adds :- पङ्क्तिविपर्यासे व्यत्यासे सति
11. P Om. आह
15. S[1-2] पुरतः for परतः
16. AS[1] स्तीर्णा for आस्तीर्णा
18. P Om. आह
18. P before इति ins. स्तीर्णौ



छन्दो० - अथ यत्र पङ्क्तिपादावितीति। **यत्र** प्रथमद्वितीयौ अष्टाक्षरौ तृतीयचतुर्थौ **द्वादशाक्षरौ सा आस्तारपङ्क्तिर्भवति। इति**-शब्दो हेतौ। यस्मादेतौ पङ्क्तिपादौ अष्टाक्षरपादौ आसने इव स्थितौ अत आस्तारपङ्क्तिः। **भद्रं नो अपि वातय** (सा.४२२)। **आग्निं न स्ववृक्तिभिः** (सा.४२०)॥५॥

## अथ यत्र पूर्वौ द्वादशाक्षरावुत्तरावष्टाक्षरौ सा प्रस्तारपङ्क्तिः। प्रस्तीर्णाविवैतौ पङ्क्तिपादाविति॥ ६॥

तत्त्व० इति। **प्रस्तीर्णौ** प्रथमतः स्तीर्णौ। गतमन्यत्। तदुक्तं *पिङ्गलनागेन*-प्रस्तारपङ्क्तिःपुरतः (पिं.छ.सू.३.४१) इति। उदाहरणम् ऋग्वेदे **भद्रमिद्भद्र** (ऋ.७.९६.३) इति॥ ६॥

छन्दो० - निगदेन व्याख्यातम्। उदाहरणम् - **काम वेद ते नाम मदो नामासि** (म.ब्रा. १.१.२)। **ऋतावानं महिषं विश्वदर्शतम्** (सा.१८१५)। **अग्निं सुम्नाय दधिरे पुरोजनाः** (सा.१८१५)। **ऋतावान**-मितीमामुपरिष्टाज्ज्योतिरिति बह्वृचाः। एतत्तु समनन्तरसूत्रे वक्ष्यामः॥ ६॥

## अथ यत्र मध्येऽष्टाक्षरावभितो द्वादशाक्षरौ सा संस्तारपङ्क्तिः। संस्तीर्णाविवैतौ पङ्क्तिपादाविति॥ ७॥

तत्त्व० - इति। **संस्तीर्णौ** सम्यक् बहिःस्तीर्णौ विस्तृतौ। तथा च *पिङ्गलनागः*- संस्तारपङ्क्तिर्बहिः (पिं.छ.सू.३.४.३) इति। स्पष्टम्।

12. A Om. उदाहरणम्
14. A Om. अग्निं .... पुरोजनाः

उदाहरणमृग्वेदे - **पितुभृतो न तन्तुमित् सुदानवः** (ऋ.१०.१७२.३) इति॥ ७॥

छन्दो० - **एतौ पङ्क्तिपादावष्टाक्षरपादौ संस्तीर्णौ** द्वादशाक्षरपादाभ्यां सम्यक् छादितौ **इव** स्थिताविति यतस्ततः **सा संस्तारपङ्क्तिर्भवति** । शिष्टं स्पष्टम् । उदाहरणमृग्वेदे - **पितुभृतो न तन्तुमित्सुदानवः** (ऋ.१०.१७२.३)॥ ७॥

**अथ यत्र मध्ये द्वादशाक्षरावभितोऽष्टाक्षरौ सा विष्टारपङ्क्तिः । विष्टब्धाविवैतौ पङ्क्तिपादाविति ॥८॥**

**तत्त्व० - विष्टब्धाविव** अन्तः स्तब्धाविव । गतमन्यत् । तदुक्तं *पिङ्गलनागेन* - **विष्टारपङ्क्तिरन्तः** (पिं.छ.सू.३.४२) इति। उदाहरणम् - **अग्ने तव श्रवो वयः** (सा. १८१६) इति॥ ८॥

छन्दो० - अत्र **छन्दोनाम्नि च** (पा.८.३.८४) इति षत्वम् । **विष्टब्धौ** संदंशवत् ग्राहकावित्यर्थः । शिष्टं स्पष्टम् । **अग्ने तव श्रवो वयः** (सा.१८१०) । **पावकर्च्चाः शुक्रवर्च्चाः** (सा.१८११) ।

ननु इलन्दिसामाधिकृत्य **समुद्रो वा एतच्छन्दः** (तां.ब्रा.५.३.३) इति ब्राह्मणे दर्शनात्, **समुद्रच्छन्दसि चोतायां द्वितीयस्थम्** (पु.सू.९.८१) इति पुष्पाच्च कथं विष्टारपङ्क्तिरिति चेत्। यदत्र वक्तव्यं तत्सर्वं सिन्धुप्रकरणे वक्ष्यामः । **अग्ने तव श्रव** (ऋ.१०.१४०.१) इति षड्चमधिकृत्य **द्वे विष्टारपङ्क्तिः तिस्रः सतोबृहत्य उपरिष्टात्ज्योतिर्** (ऋ.अ.२.६.३.१४०) इति *वररुचिरप्याह*॥

---

10. $PS^2$ विभातोऽन्तः for इव अन्तः
11. $S^{1-2}$ अन्ततः for अन्तः
14. $S^{1-2}$ Om. विष्टब्धौ . . . इत्यर्थः
16. $S^{1-2}$ Om. ननु . . . वक्ष्यामः
21. $S^{1-2}$ च for अपि



ननु **पाहि विश्वस्माद्** (सा.१५३९) **दुहान ऊधर्दिव्यम्** (सा.६७०) इत्यधिकृत्य **दान्त्यस्य तु वृद्धिर्विष्टारपङ्क्त्याम्** (पु.सू.८.१.६७) इति पुष्पसूत्रं च ऋषभयज्ञक्लृप्तौ **समन्तं विष्टारपङ्क्तौ** (आ.क.५.१३.१) इति कल्पसूत्रं च कथम्? विष्टारपङ्क्तिलक्षणविरहादिति चेत्। उच्यते। **ष्टुभि ज्ञीयं** (पु.सू.५.८२.३) **गीथोपान्त्यं त्रिषु बोधीये** (पु.सू.५.३.४४)। **तरे हारादिः** (पु.सू.५.४.१)। **त्रीक्रौञ्चप्रथमशाक्त्य** (पु.सू.१०.३.१) इत्यादि पुष्पसूत्रवत् लाघवात् पूर्वाक्षरद्वयं विना निर्देशात्। कल्पसूत्रेऽपि (७.१३.४) भीमो भीमसेन इतिवन्नामैकदेशे नामग्रहणाच्च सिद्धाविष्टारपङ्क्तिपरमेव॥ ८॥

**तत्त्व०** - अथ प्रगाथलक्षणमाह -

**तद्यत्र सिद्धाविष्टारपङ्क्तिर्बृहत्या वा ककुभो वोत्तरा भवति तां प्रगाथ इत्याचक्षते ॥ ९ ॥**

इति। **तद्** इति लुप्तविभक्तिकं पदम्। तत्पूर्वोक्ता सा पङ्क्तिषु मध्ये **यत्र** सूक्ते **सिद्धाविष्टारपङ्क्तिर्बृहत्या वा ककुभो वोत्तरा भवति तां** सिद्धाविष्टारपङ्क्तिं **प्रगाथ इत्याचक्षते** ब्रह्मवादिनः। तदुक्तं *शौनकेन*-

**बार्हतो बृहतीपूर्वः ककुप्पूर्वस्तु काकुभः।** (ऋ.प्रा.१४.१)

इति । सूत्रकारश्च - **चतुश्शतमैन्द्राः बार्हताः प्रगाथा दशतयीषु** (नि.सू.५.३.४.; द्रा.श्रौ.२.९.१.४) इति । उदाहरणम् - **दुहान ऊधर्दिव्यम्** (सा.६७६)। **यस्य ते पीत्वा** (सा.६९३) इति च॥ ९॥

---

3. $S^{1-2}$ ऋषभाख्ये यज्ञे for ऋषभयज्ञ क्लृप्तौ
6. A Om. तरे हारादिः
7. $S^{1-2}$ Om. पुष्पसूत्र; $S^{1-2}$ Om. लाघवात्
8. A Om. कल्प . . . ग्रहणाच्च
11. $S^{1-2}$ P ककुभा for ककुभो
14. P ककुभा for ककुभो

छन्दो० - यत्र ययोः ऋचोर्मध्ये **सिद्धाविष्टारपङ्क्तिर्बृहत्याः वा ककुभो वा उत्तरा भवति तद्** ऋग्द्वयं **प्रगाथ इत्याचक्षते** इत्यर्थः। उदाहरणं तु - **पुनानः सोम धारया** (सा.५११)। **अभि त्वा शूर नोनुमः** (सा.२३३)। **पवस्व मधुमत्तमः** (सा.५७८)। **प्रमंहिष्ठाय गायत** (सा.१०७) इति॥ अत एव **उच्चा - पुना** - प्रगाथः। **अभित्वाशूप्र**गाथः। **स्वादि - पवस्वम**-प्रगाथः। **प्रमंहि**-प्रगाथः। **तन्ते - श्रुधीहवन्ति** [प्रगाथः] इति प्रसिद्धिः। बह्वृचास्तु बार्हतः प्रगाथः। काकुभः प्रगाथ इत्याहुः। तदुक्तं तत्सर्वानुक्रमण्याम् - **बृहतीसतोबृहत्यौ बार्हतः। ककुप् चेत् पूर्वा काकुभः** (१.११.२-३) इति॥

ननु **परीतोषिञ्चता सुतम्** (सा.५१२) **अभिसोमास आयवः** (सा.५१८) इत्यनयोः प्रगाथव्यवहारः कथं नेति चेत्। उच्यते। ऋग्द्वयस्य साम्नि गानाय ऋक्त्रयकरणार्हविषये प्रगाथव्युत्पत्तेरत्र तिस्र ऋचः सामगानाय चतस्रः क्रियन्ते इति बृहतीपूर्वा सिद्धाविष्टारपङ्क्तिर्यद्यपि प्रगाथो भवति तथापि तत्पराध्यासया सह तृच समाप्तेः साध्यासेति भवति। शतं सहस्रे संभवतीतिवत् साध्यासायां प्रगाथस्यावश्यंभावात् न पृथक् प्रयोगः। तथा च **अभिसो**साध्यासा **तोषि**साध्यासेति प्रसिद्धिः। अध्यासा नाम बृहतीपूर्वसिद्धाविष्टारपङ्क्तेरुपरिष्टादधीता द्विपदा ऋक्। तदुक्तं धन्विना**अनध्यासा चेत् द्वयोरन्यतरं गायत्र्यां धानञ्जय्यः** (द्रा.श्रौ.१६.३.१५) इत्यत्र। तद्यथा **परीतोषिञ्चतासुतम्** (सा.५१२) **अभिसोमास आयवः** (सा.५१८) इति बृहत्यौ साध्यासे। अन्याः सर्वा अनध्यासाः। अध्यासा नाम बृहत्युपरिष्टादधीतद्विपदाद्वयमुच्यते।

---

5. A Om. आभि त्वा . . . हवन्ति
7. A इह बार्हतः प्रगाथः काकुभः प्रगाथः इति बह्वृचाः प्राहुः for बह्वृचास्तु . . . इत्याहुः
14. A सहस्रेषु शतं for शतं सहस्रे
16. $S^2$ अध्यासानां for अध्यासा नाम
17. A अधीतं for अधीता
21. $S^2$ अध्यासानां for अध्यासा नाम; A after नाम adds सः



**नृभिर्येमाणः** (सा.८५२) **परिस्वानश्च** (सा.१६०९) इत्यत्र प्रगाथनिरूपणं **प्रगाथेषु बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य च** (द्रा.श्रौ.२०.४.२) इत्यादि च्छन्दोगसूत्रस्य प्रगाथार्थज्ञापनार्थम्। यद्वा आदौ **छन्दसां विचयं व्याख्यास्यामः** (नि.सू.१.१.१) इति प्रतिज्ञानात् प्रगाथानां सामगानाय ऋक्त्रयकरणे उत्तरयोः ऋचोरपि छन्दोऽन्तरविधानार्थम्। अन्यथा पूर्वपूर्वान्त्यपादाभ्यासात् पादाभ्यासयुक्तराजनादिवत् छन्दोऽन्तरं न स्यात्। पराचीरथन्तरे सिद्धाविष्टारपङ्क्तावेव स्तोत्रीयाद्वयसंपादनात् छन्दोऽन्तरं न स्यात्। छन्दोऽन्तरं तु **पुना**प्रगाथस्य रौरवादिषु बृहतीत्वं यज्ञायतीये ककुप्त्वम् **अभित्वाशू** - प्रगाथस्य कण्वरथन्तरादिषु बृहतीत्वं रथन्तरे ककुप्त्वं पराचीरथन्तरे द्विपदाविष्टारपङ्क्तित्वम्। **त्वं न श्चित्र** (सा.१६२३) इति प्रगाथस्य वारवन्तीये बृहतीत्वं ककुप्त्वं च **पवस्वम- प्रमंहिष्ठा** - प्रगाथयोः **सफप्रमंहिष्ठीयादिषु ककुप्त्वम्। एवमन्यप्रगाथेष्वपि** द्रष्टव्यम्। तथा च ब्राह्मणं **पुना**-प्रगाथमधिकृत्य **बृहत्यां भूयिष्ठानि सामानि भवन्ति** (तां.ब्रा.७.३.१६) इति। **त्रिच्छन्दा माध्यंदिनः पवमानः** (ऐ.ब्रा.१.३.२) इति च। **प्रगाथेषु बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य चानादेशे ककुभावुत्तरे** (द्रा.श्रौ.२०.४.२) इति **अभित्वाशू** -प्रगाथस्य वैश्वस्तोमक्लृप्तौ **अभि त्वा शूर नोनुमः** (सा.६७४-६७५) इति **कण्वरथन्तरं पृष्ठम्** (आ.क.४.११.२) इति कल्पसूत्रम्। तत्र भाष्यम् - **कण्वरथन्तरं सर्वबृहतीषु। तथा च निदानम् - सर्वबृहतीषु नान्यद् बृहद्रथन्तराभ्यामर्हति यत् ककुबुत्तरासु स्यात्** (नि.सू.७.४) इति (आ.क.४.११.५)। रथन्तरमधिकृत्य ब्राह्मणम् - **तस्मात् बृहती प्रथमा ककुभावुत्तरे** (तां.ब्रा.७.७.५) इति। पराचीरथन्तरस्यापि स्तोत्रीया। **एकं साम तृचे क्रियते। स्तोत्रीय [स्तृचो भवति]** (तां.ब्रा.१४.१.७) इति श्रुतेः। स्तोत्रीयात्रयकरणात्

---

2. $S^1$ इत्यत्र for इत्यादि; $S^2$ Om. आदि
3. $S^{1-2}$ Om. छन्दोगसूत्रस्य
5. $S^1$ ऋचयोः for ऋचोः
18. A बृहतीषु नान्यत्
22. $S^{1-2}$ Om. स्तोत्रीया; A स्तोत्रीय . . . इति श्रुतेः
23. A नादार्थात् ऋक्त्रित्वात् for स्तोत्रीयात्रयकरणात्

उत्तरयोर्द्विपदाविष्टारपङ्क्तित्वमेव। **त्वं नश्चित्र** (सा.१६१७-१८) इति प्रगाथवारवन्तीयमधिकृत्य वाजपेये निदानकारः - **त्वं नश्चित्रेति** वारवन्तीयमग्निष्टोमसाम . . . **ककुबुत्तरासु ककुबुत्तरास्थानं** हि **सर्वबृहतीष्वेके** (नि.सू.७.४) इति। **पवस्व** - प्रगाथस्य उष्णिक्ककुभावेते भवतः (तां.ब्रा.८.५.१) इति ब्राह्मणम्॥ ९॥

**आनुष्टुभा अपि प्रगाथा भवन्तीत्येके ।**

**अनुष्टुप् प्रथमा । गायत्र्यावुत्तरे । यथा**

३ १ २ ३ १ २
**पुरोजिती वो अन्धसः** (सा.६९१.९३) ।

२ ३ २ ३ २ ३ १ २
**आ त्वा रथं यथोतये** (सा.१७६५.६७)

३ १ २ ३ १ २
**विशोविशो वो अतिथिम्** (सा.१५६४-

२ ३ २ ३ १ २ ३
६) । **पान्तमा वो अन्धसः** (सा.७१३-५)

इति ॥ १० ॥

तत्त्व० - **आनुष्टुभा अपि प्रगाथा भवन्तीत्येके** आचार्याः। तस्येदं लक्षणम् - **अनुष्टुप् प्रथमा गायत्र्यावुत्तरे** इति। तथा च ब्राह्मणम् - **त एतमनुष्टुप्शिरसं प्रगाथमपश्यम्** (तां.ब्रा.९.१.१) इति। *शौनकश्च*- **अनुष्टुब द्वे च गायत्र्यावेष आनुष्टुभः स्मृतः।** (ऋ.प्रा.१८.३) इति। अत्रोदहरणानि स्वयमेव दर्शयति - **यथा पुरोजिती वो अन्धसः** (सा.६९१) । **आ त्वा रथं यथोतये** (सा.१७६५) **विशो विशो वो अतिथिम्** (सा.१५५८)। **पान्तमा वो अन्धसः** (सा.७०७) इति॥१०॥

14. P तद् for तस्य
17. P उदाहरणं for उदाहरणानि



छन्दो० - यत्र **प्रथमा** ऋगनुष्टुप् द्वितीयातृतीये **गायत्र्यौ** ते **आनुष्टुभाः प्रगाथा अपि भवन्तीति** केचिदाचार्याः प्राहुः। **आनुष्टुभा** इति विशेषणमनुष्टुप्च्छन्दःसम्पादनाय पादाभ्यासकरणार्थम्। तान् स्वयमेवोदाहरति - यथा **पुरोजिती वो अन्धसः** (सा.६८१-८३)। **आ त्वा रथं यथोतये** (सा.१७६५-६७) **विशो विशो वो अतिथिम्** (सा.१५५८-६०)। **पान्तमा वो अन्धसः** (तां.ब्रा.७१३.५)। इतीति। अत एव पुरोजित्यां श्यावाश्वादिषु प्रगृथ्य गानं भवति। **आत्वारथमित्यत्र** कालेयमधीतम्। तत्र प्रगृथ्य गानाभावात्। प्रगृथ्य तस्यां गानं शाखान्तरे द्रष्टव्यम्। **वाजभृद्यस्या हाइ** (प्र.हा.सू.३.६०) इति प्रतिहारसूत्रोक्त वाजभृत्सामवत्। **विशो विश** इत्यत्र यज्ञायज्ञीयादिषु प्रगृथ्य गानम्। यज्ञायज्ञीये तु प्रगाथेषु बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य च (द्रा.श्रौ.२०.४.३-४) इति वचनात्।

द्व्यक्षरप्रस्तावोऽपि दृश्यते। **पान्तमित्यत्र** वैतहव्ये उत्तरयोः स्तोत्रीययोः पूर्वपूर्वस्तोत्रीयान्त्यपादाभ्यासे प्राप्ते प्रथमानि पदानि पुनः पुनरादीनि भवन्ति। **प्रथमस्य पर्यायस्य** (तां.ब्रा.९.१.४) इति ब्राह्मणात् गायत्रीपूर्वपादाभ्यासगानं भवति। एतासामेकीयमते प्रगाथत्वात्

2. A after प्राहुः adds : स इति पद्या चाक्षर्य्यां च विराजौ भवत इति यदुक्तं ब्राह्मणे तत् अर्थवादार्थमिति दर्शयितुम्
7. P प्रगाथत्वात् for अतः; S[1] प्रगथ्य for प्रगृथ्य
8. A Om. प्रगृथ्य गानाभावात्; S[1-2] प्रगृथ्य गानं for प्रगृथ्य तस्यां गानं
9. S[1-2] वाजभृद् . . . सामवत्
10. S[1] प्रगाथं for प्रगृथ्य; A before गानं adds न
11. S[1-2] बृहद्रथन्तरयोर्यज्ञायज्ञीये च
13. A च अधीयते for अपि दृश्यते
14. S[1] Om. one पूर्व; S[1-2] Om. one पुनः
16. S[2] Om. गायत्रीपूर्व

तन्मतानुसारेण संवत्सरतन्त्रे पुरोजित्यनुष्टुप्त्वसंपादनाय अन्त्यपादाभ्यासेन यज्ञायज्ञीयमधीयते। अन्यमते प्रगाथत्वाभावात् प्रायश्चित्ततन्त्रे पराचीषु गीयते। किञ्चित्तृचत्वेऽपि प्रगाथत्वादेव उत्तरयोः स्तोत्रीययोः **प्रगाथेषु बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य चानादेशे ककुभावुत्तरे। तयोर्द्व्यक्षरः-प्रस्तावः सर्वत्र** (द्रा.श्रौ.२०.४.३-४) इति ***द्राह्यायणेनोक्त***-द्व्यक्षरप्रस्तावो भवति। अत्र तयोरित्यस्य ककुभोरित्येवार्थः। किं च अविशेषेणोत्तरयोरित्यर्थः।

ननु बृहद्रथन्तरयोरिति वचनात् बृहद्रथन्तरस्य रथन्तरबृहतश्च द्व्यक्षरप्रस्तावो विधीयते। तत् कथमितिचेत्। उच्यते। तयोरुभययोनिकत्वात् रथन्तरबृहतो रथन्तरवत् प्रस्तावो भवति। आदिभागस्य रथन्तराङ्गत्वात् बृहद्रथन्तरस्य बृहद्वत् प्रस्तावो भवति। आदिभागस्य बृहदंशत्वात्। तस्मात् संवत्सरतन्त्रे अधीतपुरोजितीयज्ञायज्ञीयोत्तरयोः स्तोत्रीययोः द्व्यक्षरप्रस्तावः प्रगाथप्रयोजनम्। अन्यमते प्रगाथत्वाभावात्। प्रायश्चित्ततन्त्रे पुरोजित्यां पराचीषु अधीतयज्ञायज्ञीयस्य उत्तरयोः स्तोत्रीययोः **तृचेष्वक्षरसङ्गेन प्रथमाया उत्तममक्षरं मध्यमायाश्च प्रथमम्** (द्रा.श्रौ.२०.४.५-६) इत्यादि***द्राह्यायणो***क्ताक्षरसङ्गेन द्व्यक्षरप्रस्तावोऽधीयते। किं च पुरोजित्यां प्रगाथेन अनुष्टुप्त्वसंपादितयज्ञायज्ञीयस्य वाजपेये प्रयोगः प्रगाथप्रयोजनम्। तद्यथा वाजपेये क्रतौ कल्पसूत्रकारेण **श्यावाश्वस्य यज्ञायज्ञीयं त्वन्नश्चित्र ऊत्येति वारवन्तीयमग्निष्टोमसाम** (आ.क.४.७.५) इति श्यावाश्वस्य

2. A अन्यत्र for प्रायश्चित्ततन्त्रे
6. A after प्रस्तावः ins. अपि; $S^{1-2}$ तर्हि for च
9. A अधीयते for अधीत
13. $S^{1}$ अधीयते for विधीयते
19. A Om. क्रतौ
20. $S^{1-2}$ after इति add : पुरोजित्यां



स्थाने यज्ञायज्ञीयं विहितम्। तत्र किं यज्ञायज्ञीयं भवतीत्याकाङ्क्षायां सर्वानुष्टुप्स्वेव यज्ञायज्ञीयं भवति। **विच्छन्दसामनुच्छन्दसं विनियोगः** इति वचनात्। आनुष्टुभश्यावाश्वस्य स्थाने विधानात् संभवाच्च। कलशदीर्णप्रायश्चित्ते कल्पकारेण क्षुद्रकल्पे (१.९) **पुरोजितीति यज्ञायज्ञीयं तिसृषु अनुष्टुप्प्रथमा एवं गायत्र्यावुत्तरे** (क्षु.क.१.९.३) इतिवदत्र विशिष्य वचनाभावाच्च।

ननु तत्रैव कल्पसूत्रे **वषट्कारणिधनं ब्रह्मसामेत्यादौ पुरोजित्यां यज्ञायज्ञीयं तिसृषु सर्वास्वनुष्टुप्सु** (क्षु.सू.१.९.६) इति सर्वानुष्टुप्प्रयोगेऽपि विशेषवचनात्। प्रकृते तादृशविशेषवचनाभावात् कथमिति चेत्। उच्यते। तत्र प्रायश्चित्ततन्त्रे पराचीष्वध्ययनात् तस्यैव सर्वत्र प्राप्तौ विशेषवचनेन व्यवस्था कृता। इह तु मदुक्त एव हेतुः समीचीनः॥

ननु **यत्रान्यदग्निष्टोम साम भवति, तत्र यज्ञायज्ञीयमनुष्टुभि भवति** (नि.सू.६.३.५) इति निदानवचनात् भवतीति चेत्। न। तस्य सार्वत्रिकत्वाभावात्। तथा हि - योनेर्यज्ञक्रतुक्लृप्तौ क्षुद्रकल्पकारेण **योनेर्यज्ञं प्रतन्वानस्येत्यादिना उप-दवि-पवेति** यज्ञायज्ञीयानि बहिष्पवमाने विधाय **यज्ञायज्ञीयस्यर्क्षु गायत्राग्निष्टोमसाम** विधाय **समानमितरं ज्योतिष्टोमेन** (क्षु.सू.१.४.१४) इत्युक्तम्। तत्रार्भवेऽनुष्टुप्सु यज्ञायज्ञीयाभावात् तथा यज्ञायज्ञीयानुरूपाग्निष्टोमक्लृप्तौ क्षुद्रकल्पकारेण **यज्ञायज्ञीयानुरूपे। गायत्रं स्तोत्रीयपर्यासयः** (क्षु.सू.२.५.५) इत्यादिना **यज्ञायज्ञीयस्यर्क्षु**

3. $S^{1-2}$ अनुष्टुप् for आनुष्टुभ
4. A क्षुद्रकल्पकारेण for कल्पकारेण क्षुद्र कल्पे
9. $S^{1-2}$ अत्र for प्रकृते; A Om. उच्यते
10. $S^{1-2}$ प्रायश्चित्ते for प्रायश्चित्ततन्त्रे;
A अनुष्टुब्बादिगायत्र्युत्तराध्ययनात् for पराचीष्वध्ययनात्
12. A तत् for तत्र
19. $S^{1}$ पर्याययोः for पर्यासयः

**बृहदग्निष्टोमसाम समानमितरं ज्योतिष्टोमेन** (क्षु.सू.२.५.६) इत्युक्तम्। तत्राप्यनुष्टुप्सु यज्ञायज्ञीयाभावात् मदुक्तहेतुरेव समीचीनः। एवं विविच्य वाजपेये कल्पभाष्यादौ नोक्तम्॥

अत्र वदन्ति। योनेः यज्ञक्रतुक्लृप्तौ **उप-दवि-पवेति** नवसु स्तोत्रीयास्वपि गीयमानं यज्ञायज्ञीयमेकमेव **गीतिषु सामाख्या** (जै.सू.२.१.३६) इति यज्ञायज्ञीयगीतेरेकत्वात् **यज्ञायज्ञीयानि बहिष्पवमानं विधायेत्यनुपपत्तिः**। न च ऊहाध्ययनानुरोधात् तिसृषु स्तोत्रीयासु गीतमेकं साम। अत एव **गणगीतानामन्ते निधनम्** (पु.सू.८.५.११) इति पुष्पसूत्रमिति वाच्यम्। तर्हि **वारवन्तीयं वा वामदेव्यं वा श्रुध्यं वैतेषामेकं पशुकामाय संधिं कुर्यात्** (क्षु.सू.१.७.३) इत्यादौ वारवन्तीयं वा वामदेव्यं वा श्रुध्यं वेत्येकवचनानुपपत्तेः। **गणगीतानामन्ते निधनम्** इत्यत्रापि गणतया गीतानामित्यर्थः। अत एवोक्तं पुष्पभाष्ये **येषां गानं गणशो भवति तेषां गणगीतानां सामान्ते निधनं भवति। वारवन्तीयवामदेव्यश्रुध्यानामेनादितृचेषु वारवन्तीयस्येति**। अन्यथा एनादितृचेषु वारवन्तीयानामित्युक्तिः स्यात्। तथा **गणगीतानां सामान्ते निधनं भवतीत्यत्रापि** गणगीतानामन्त्यसामान्ते निधनं भवतीत्यपि वक्तव्यं स्यात्। न च ऊहे विंशतिसामप्रघट्टपरिगणनं तथा कृत्वेति वाच्यम्। तथा परिगणनस्य पामराध्यापकप्रलापत्वान्न्याय-विद्भिर्मीमांसापारगैः संप्रदायप्रवर्तकैः पुष्पभाष्यकारादिभिस्तथानङ्गीकारात्। किंच। **देवा वै ब्रह्म व्यभजन्तेति** यज्ञायज्ञीयविधौ **योनिर्वै यज्ञायज्ञीयम् एतस्माद्वै योनेः**

2. A तस्मात् तदुक्तः for मदुक्तहेतुः
4. A Om. अत्र; S[1] नवं for नवसु
9. S[1] तथा हि for तर्हि
13. S[1] after भवति adds : सामान्ते निधनं भवतीत्यत्रापि
15. S[2] तया for तथा
16. S[1] after इति ins. अत्र
17. S[2] ऊह for ऊहे



**प्रजापतिर्यज्ञमसृजत। तस्माद्यज्ञायज्ञीयम्। तस्माद्वा एतेन पुरा ब्राह्मणाः बहिष्पवमानमस्तोषत। योनेर्यज्ञं प्रतनवमहा इति। यज्ञन्ततः स्तुवन्ति योनौ यज्ञं प्रतिष्ठापयन्ति** (तां.ब्रा.८.६.३-४) इति श्रुत्या योनेर्यज्ञक्रतौ यज्ञायज्ञीयानुरूपाग्निष्टोमे च यज्ञायज्ञीयसंयोगस्य श्रुतिचोदितत्वात् श्रुतिचोदनाविरहस्थल एव निदानकारेण **यत्रान्यदग्निष्टोमसाम स्यात् तत्र यज्ञायज्ञीयमनुष्टुभि भवति** (नि.सू.६.३) इति विधानात्। न च श्रुतौ यज्ञायज्ञीयस्थले योनेर्यज्ञक्रतावेव बहिष्पवमानत्वेन यज्ञायज्ञीयानुवादात् तत्रैव तस्य बहिष्पवमानत्वविधिः। न तु यज्ञायज्ञीयानुरूपाग्निष्टोम इति वाच्यम्। यज्ञायज्ञीयमधिकृत्य बहिष्पवमानसंयोगस्य उभयत्राविशिष्टत्वात्। अन्यथा यज्ञायज्ञीयानुरूपाग्निष्टोमक्रतोः श्रुतिमूलत्वाभावप्रसङ्गात्। न च अन्यैवास्मादपाठ्यमाना श्रुतिस्तन्मूलमिति वाच्यम्। तर्हि तस्या एव श्रुतेः बहिष्पवमाने यज्ञायज्ञीयानुरूपत्वविधायकत्वेन तद्भिन्नस्थले निदानकारेणानुष्टुभि यज्ञायज्ञीयनिधनविधानात् इति संक्षेपः इति।

ननु **गायत्रीकारम्। प्रगाथकारं वा** (द्रा.श्रौ.२.४.१४-१५) इत्येतत्सूत्रोक्त- **युञ्जे वाचं शतपदीम्** (सा.१८२३) इत्यस्याः प्रगाथकारगाने पूर्वोक्तोभयविधलक्षणासंभवात् प्रगाथगानस्यापि गायत्रीत्वात् कथं प्रगाथत्वमिति चेत्। उच्यते। पूर्वपूर्वस्तोत्रीयान्त्यपादाभ्यासेन प्रगाथोपमानात् प्रगाथव्यवहार इत्यलं विस्तरेण॥ १०॥

11. S[2] Om. क्रतोः; S[2] रूप for रूपत्व
14. S[1] नियम for निधन
16. S[1-2] Om. एतत्
17. A Om. अभावात् for असंभवात्; S[1] गानं स्यात् for गानस्यापि
19. A Om. इति; A प्रसङ्गेन for विस्तरेण

## अथाक्षरपङ्क्तयो विंशत्यक्षराश्चतुष्पदाः पञ्चाक्षरपादाः ॥११॥

**तत्त्व०** - **अथ** चत्वारिंशदक्षराभ्यः पङ्क्तिभ्योऽन्या अक्षरपङ्क्तयः, तासामिदं लक्षणम् - **विंशत्यक्षराश्चतुष्पदाः पञ्चाक्षरपादा** इति। उदाहरणम् - **पवस्व सोम महान्त्समुद्रः** (सा.४२९) इति॥ ११॥

**छन्दो०** - विंशत्यक्षरयुक्ताः पादचतुष्टयवत्यः **अक्षरपङ्क्तयो** भवन्ति। पादास्तु पञ्चाक्षरा भवन्ति। उदाहरणानि - **पवस्व सोम** (सा.४२९) **प्रवाज्यक्षाः** (सा.११७) इत्यादीनां विकर्षेण पञ्चाक्षरत्वम्॥ ११ ॥

## द्विपदा एना एके प्रतिजानते ॥ १२ ॥

**तत्त्व०** - **एके** आचार्याः **एना** अक्षरपङ्क्तीः **द्विपदाः प्रतिजानते**। दशाक्षरपादास्तर्हि ताः। **समं स्यादश्रुतत्वात्** (जै.सू.१०.३.५३) इति न्यायात् समविभागस्योचितत्वात्। तथा च संहिताध्ययनम् - **पवस्व सोम महान्त्समुद्रः** (सा.४२९) इत्यादि॥ १२॥

**छन्दो०** - **एनाः** अक्षरपङ्क्तीः **द्विपदाः** दशाक्षरपादा इत्येके आचार्याः प्रतिजानते । तथा प्रतिहारसूत्रे ह्युभयथा व्यवहारः । **धर्मविधर्मिणोर्द्विपदाकारे** (प्रा.सू.७.२३) इति **धर्मविधर्मिणोश्चैवं चतुष्पदाकारे** (प्र.सू.१.१४) इति च॥ १२॥

---

9. PS[2] द्विपदामेनां for द्विपदा एनाः
10. PS[2] एनामक्षर पङ्क्तिं for एनाः अक्षरपङ्क्तीः; PS[2] द्विपदां for द्विपदाः
12. As[1-2] अश्रुतत्वात् for समविभागस्योचितत्वात्
13. P आदिः for अदि
15. A Om. ब्राह्मण for ब्रह्मक्षत्र



## पञ्चविंशत्यक्षरापि भवति । पञ्चपदा पञ्चाक्षरपादा। तां पदपङ्क्तिरित्याचक्षते॥१३॥

**तत्त्व०** - **पञ्चपदा** अपि अक्षरपङ्क्तिर्भवति। **पञ्चविंशत्यक्षरा पञ्चाक्षरपादा** । तथा च ब्रह्मक्षत्रकल्पौ । **अक्षरपङ्क्तिषु ज्यैष्ठ्यकामायोक्थानि प्रणयेयुः** (तां.ब्रा.८.१०.१) इति ब्राह्मणस्य कल्पः। **अग्ने तमद्याश्वं न स्तोमैः** (सा.१७७१-३) इति साकमश्वम् इति।

**तां** पञ्चपदामक्षरपङ्क्तिं **पदपङ्क्तिरित्याचक्षते** ब्रह्मवादिनः इति। तथा च पिङ्गलनागः, पञ्चका इत्यनुवर्तमाने - **पदपङ्क्तिः पञ्च** (पिं.छ.सू.३.४६)। **चतुष्कषट्कौ त्रयश्च** (पिं.छ.सू.३.४७) इति। **अग्ने तमद्याश्वम्** (सा.४३४) इत्यादौ त्रयः पादाः चतुष्कषट्कौ द्वौ पादाविति तदुक्तलक्षणसङ्गतिः॥ १३॥

*इति [ श्रीतातप्रसादविरचितायां* ***तत्त्वसुबोधिन्यां*** *] निदानसूत्रवृत्तौ प्रथमपटले तृतीयः खण्डः॥ ३ ॥*

**छन्दो०** - **अपिशब्देन अक्षरपङ्क्तय** इत्यनुवर्तते । तद् बहुवचनान्तमपि **पञ्चविंशत्यक्षरे**त्यनेन सामानाधिकरण्यात् एकवचनतया विपरिगण्यते। पञ्चविंशत्यक्षरयुक्ता पादपञ्चकवत्यपि अक्षरपङ्क्तिर्भवति। पादाश्च पञ्चाक्षराः। एनामक्षरपङ्क्तिं **पदपङ्क्तिरि**ति केचित् **आचक्षत** इत्यर्थः। तथाह यजुर्वेदसर्वानुक्रमणीकारः - **अक्षरपङ्क्तिः पञ्चकाश्चत्वारो द्वौ वैको वा पञ्च वा तां पञ्चपदां पदपङ्क्तिरित्येके**। इति। उदाहरणानि - **अग्ने तमद्य** (सा.१७७१)। **अधा ह्यग्ने** (सा.१७७२)। **एभिर्नो अर्कैः** (सा.१७७३) इति॥

---

4. PS[2] ब्राह्मण for ब्रह्मक्षत्र
6. S[1-2] Om. इति

**अग्ने तमद्यकमश्वे** (पु.सू.६.१०.२५) इति पुष्पेण पञ्चाक्षरपादत्वमङ्गीकृत्य प्रश्लेषविधानात् अस्या एव पञ्चपदाक्षरपङ्क्तित्वात् वेदसामऋक्समाम्नाये पङ्क्तिप्रकरणे पाठाच्च उन्नीयते। पञ्चाक्षरपादः षडक्षरपर्यन्तमारोहति। चतुरक्षरपर्यन्तमारोहतीति च। अत्र **अक्षरपङ्क्तिषु ज्यैष्ठ्यकामायोक्थानि प्रणयेयुः** (तां.ब्रा.८.१०.९) इति ब्राह्मणोक्तज्यैष्ठ्यकामक्रतुं क्षुद्रकल्पसूत्रकारः कल्पयन् तत्र **अग्ने तमद्येति** (क्षु.क.१.६.१४) साकमश्वं विदधाति स्म। तत्र कल्पभाष्यकारः **अथाह अग्ने** (सा.१७७१-७३) इति मध्यमाक्षरपङ्क्तिः षड्विंशत्यक्षरा भवतीत्यवोचत्। तन्मते **अधा ह्यग्नेः** (सा.१७७२) इति विकर्षः कर्तव्यः। तस्या एकाक्षराधिक्यात् भुरिगक्षरपङ्क्तिच्छन्द इति ज्ञेयम्। इमामक्षरपङ्क्तिं पदपङ्क्तिर्गायत्रीति बह्वृचाः प्राहुः। यथाह वररुचिः - **पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा पदपङ्क्तिः** (ऋ.अ.१.४.१) इति। अन्त्यषडक्षरपादां भूरिक्पदपङ्क्तिरिति *शौनकः*। यथा-

**पञ्चकाः पञ्च षड्वान्त्यः पदपङ्क्तिर्हि सा भुरिक्।**

(ऋ.प्रा.१६.१८) इति॥ १३॥

*इति तञ्जावूर्ग्रामनिवासिपेत्ताशास्त्र्यपराभिधानेन हृषीकेशशर्मणा विरचितायां छन्दोविचितिवृत्तौ प्रथमे पटले तृतीयः खण्डः॥ ३॥*

***

2. S[1] पादत्वेन, S[2] पादेन for पादत्वम्
3. S[2] साम्ना for साम
4. A Om. अत्र
6. S[1-2] Om. क्षुद्र
7. A Om. स्म
10. S[1-2] after आधिक्यात् ins. भुरिगक्षराधिक्यात्

## चतुर्थः खण्डः

**चतुश्चत्वारिंशदक्षरा त्रिष्टुप्। चतुष्पदैकादशाक्षरपादा॥१॥**

तत्त्व० - गतम्। यथा - **प्र तु द्रव** (सा.५२३) इति॥ १॥

छन्दो० - एकादशाक्षरपादचतुष्टयवती त्रिष्टुप् भवति। सा चतुश्चत्वारिंशदक्षरा चेदक्षरैः पूर्णा भवति। **प्र तु द्रव परि कोशन्निषीद** (सा.५२३)। **अरण्योर्निहितो जातवेदाः** (सा.७९)। **तदिदास भुवनेषु ज्येष्ठम्** (सा.१४७७)॥ १॥

**अथ यत्रोत्तमोऽष्टाक्षरस्तां ज्योतिष्मतीत्याचक्षते॥२॥**

तत्त्व० - यत्र त्रिष्टुभि उत्तमः पादः अष्टाक्षरो भवति, अवशिष्टानि षट्त्रिंशदक्षराणि समशो विभागात् द्वादशाक्षरपादास्त्रय इति गम्यते तामेवंरूपां ज्योतिष्मतीत्याचक्षते। अतः एव *शौनक* आह -

**त्रयश्च द्वादशाक्षरा एकश्चाष्टाक्षरः क्वचित्।**
**सैषा ज्योतिष्मती नाम ततो ज्योतिर्यतोऽष्टकः॥**

(ऋ.प्रा.१६.७०) इति। यथा - **अग्निनेन्द्रेण** (ऋ.८.३५.१) इति॥ २॥

छन्दो० - अत्रोत्तमपादव्यतिरिक्ताः पादा एकादशाक्षराः। त्रैष्टुभत्वात्। यथाह *शौनकः* -

**एकादशिद्वादशिनौ विद्यात् त्रैष्टुभजागतौ।**

17. S[2] एकादश for एकादशि।
17. S[2] द्वादशिनां for द्वादशिनौ।

(ऋ.प्रा.१७.३८) इति । त्रिष्टुभ एव विधेयत्वेन प्रकृतत्वाच्च । न च चतुश्चत्वारिंशदक्षरेत्यस्यापि प्रकृतत्वात् द्वादशाक्षरा इति वाच्यम् । अनुवृत्त्यभावात्। अत एवोक्तं यजुर्वेदसर्वानुक्रमणीकारेण **त्रय एकादशाक्षरा अष्टकश्च ज्योतिष्मती त्रिष्टुप्** इति । न च ऋग्वेदसर्वानुक्रमण्यां **द्वादशिनस्त्रयोऽष्टकश्च ज्योतिष्मती** (ऋ.अ.१.९.७) इति त्रिष्टुबधिकारे दर्शनात् द्वादशाक्षरपादा इति वाच्यम् । यजुर्वेदसर्वानुक्रमण्यां **द्वादशिनस्त्रयोऽष्टकश्च जगती ज्योतिष्मती सापि त्रिष्टुबिति शौनकः** इति वचनात्। बह्वृचानामेव शौनकमतेन द्वादशाक्षरपादयुक्ता त्रिष्टुप् भवति। न तु छन्दोगानाम्। यदि छन्दोगानामपि त्रिष्टुप् स्यात् तदा **सापि त्रिष्टुबिति शौनकछन्दोगौ** इति ब्रूयात्। तस्मात् त्रय एकादशाक्षरा उत्तमोऽष्टाक्षरस्ता ज्योतिष्मती त्रिष्टुबिति **एतच्छन्दोविचितिकारा आचक्षत इत्यर्थः । विराड्रूपा त्रिष्टुबिति बह्वृचानां वररुचिमते** । यथाह वररुचिः - **एकादशिनस्त्रयोऽष्टकश्च विराड्रूपा** (ऋ.अ.१.९.६) इति । **अग्निं क्रव्यादमकृण्वन् गुहानाः** (मं.ब्रा.१.१.४) । **भ्राजन्त्यग्ने समिधा न दीदिवः** (सा.६१५) ॥ २ ॥

**पञ्चपदापि भवति । चत्वारोऽष्टाक्षरा एको द्वादशाक्षरः ॥३॥**

तत्त्व० - पञ्चपदापि भवति त्रिष्टुप् । तस्याः पादानाह - **चत्वार** इति । अस्यास्त्रिष्टुभो महाबृहतीति संज्ञामाह ***शौनकः*** -

**चत्वारोऽष्टाक्षराः पादा एकश्च द्वादशाक्षरः ।**
**सा महाबृहती नाम यवमध्या तु मध्यमे ॥**

(ऋ.प्रा.१६.७१.२) । इति । उदाहरणम् - **नवानां नवतीनाम्** (ऋ.वे.१.१९१.१३) इति ॥ ३ ॥

8. $S^{1-2}$ Om. एव।
8. $S^{1}$ Om. द्वा।
12. $S^{2}$ विराजो वा for विराड्रूपा।
12. $S^{1-2}$ मतेन for मते।



छन्दो० - **चत्वारः पादा अष्टाक्षरा एको द्वादशाक्षरः** । स तु यत्र कुत्र वा स्थितः । उत्तम इत्यादिविशेषवचनाभावात्। एवंभूतापि त्रिष्टुप् भवति। महाबृहतीति बह्वृचाः । यथाह वररुचिः - **चत्वारोऽष्टाक्षरा जागतश्च महाबृहती** (ऋ.अ.१.९.९) इति। **कन्यलापितृभ्यः पतिलोकं यतीयम्** (तां.ब्रा.१.२.५) ॥ ३ ॥

**अष्टाचत्वारिंशदक्षरा जगती । चतुष्पदैव द्वादशाक्षरपादा ॥ ४ ॥**

तत्त्व० - स्पष्टम् । उदाहरणम् - **अभि प्रियाणि पवते** (ऋ.वे.९.९७.१२) इति ॥ ४ ॥

छन्दो० - द्वादशाक्षरपादचतुष्कयुक्ता जगती भवति । सा अष्टाचत्वारिंशदक्षरा चेत् अक्षरैः पूर्णा भवति **सूर्यस्येव रश्मयो द्रावयित्नवः** (सा.१३६४) । **इमं स्तोममर्हते जातवेदसे** (सा.६६) । **अभि प्रियाणि पवते चनोहितः** (सा.५५४) । **विश्वाः पृतना अभिभूतरन्नरः** (सा.३७०) । **धर्ता दिवः पवते कृत्व्यो रसः** (सा.५५८) ॥ **विश्वाः पृतनाः अभिभूतरन्नरः** (सा.३७०) इत्यतिजगती **वर्षीयच्छन्द आक्रमत** (तां.ब्रा.१२.१०.२) इति द्वादशाहब्राह्मणे अतिजगतीत्वेन श्रूयमाणा पूर्णजगत्यपेक्षया द्व्यक्षराधिक्यात् । ऊनाक्षरा गायत्री आमहीयवत्। न त्वतिजगती नाम किञ्चिच्छन्दोऽस्ति। एतच्छन्दोविचितौ तल्लक्षणाभावात्।

ननु तृतीयपादस्य द्वादशाक्षरपादविकारैकादशाक्षरत्वात् अत एव एकाक्षरधिक्यात् भुरिक्जगतीपरमिति चेत् । उच्यते । तृतीयपादस्य

1. A Om. स तु।
4. AP यदीयम् for यतीयम्।
6. P trans. एव after अक्षरपादा, A Om. एव।
10. A त्रयवती for चतुष्कयुक्ता।
11. $S^{1-2}$ Om. सूर्यस्येव . . . द्रावयित्नवः।
14. $S^{2}$ Om. धर्ता . . . रसः।
19. $S^{2}$ पादस्यैक्यात्।
19. $S^{1-2}$ अभिध for पादविकार।
19. A Om. अत एव।
20. A एकादश for एक ।

**नियमूसमि**त्यक्षरविकर्षेण द्वादशाक्षरत्वमित्यवगन्तव्यम्। अत एव अस्या ऋचः पञ्चाशदक्षरत्वात् **त्रैशोकं ज्योगामयाविने ब्रह्मसाम कुर्यात्** (तां.ब्रा.८.१.८) इति ब्राह्मणोक्तज्योगामयाविसंज्ञं यज्ञं कल्पयता प्रकल्पसूत्रकारेण क्षुद्रकल्पे **ज्योगामयाविन आनो मित्रावरुणेत्यादिना त्रैशोकं ब्रह्मसामेति** नौधसस्य स्थाने त्रैशोकं विधाय **इन्द्रं विश्वा अवीवृधन्** (सा.८२७.९) इति **कालेयं तरोभिर्व** (६८७-९) इति कालेयस्थाने इन्द्रं विश्वेति कालेयं च विधाय **उप शिक्षे**(सा.७६१)ति सफं **पवस्व मधु** (सा.६८६.८७) स्थाने विधाय **तस्य सम्पदित्यादिना सप्ततिरक्षराणि त्रैशोकादतिरिच्यन्ते। तावत् सफकाले याभ्यां लुप्यते तत्सम्पन्नम्** (क्षु.सू.१.२) इत्युक्तम्। तत्र कल्पभाष्यकारेण नौधसस्थाने त्रैशोकस्य विधानात् गर्भिण्यां विष्टुतौ पञ्चकृत्वोऽभ्यासात् प्रागुक्त नौधसापेक्षया सप्ततिरक्षराण्यतिरिच्यन्ते इति व्याख्यातम्॥

ननु बह्वृचसर्वानुक्रमण्यां **विश्वाः पृतनाः** (सा.९२४.२३) इति तृचमधिकृत्य **अतिजगत्युपरिष्टात् बृहत्यौ** (ऋ.अ.२.४६.९८) इत्युक्तम्। तदपेक्षो वा अतिजगतीवाद इति चेत्। न। पादचतुष्टयवत्त्वात् यद्यतिजगती तदा पादपञ्चकवती स्यात्। पादा अतिजगत्यास्तु **त्रयो द्वादशकाः। परावष्टकावि**ति शौनकवचनात्॥

ननु पदपञ्चकत्वं व स्यादिति चेत्। उच्यते। पादचतुष्टयवत्त्वमेव। कुतः? ***द्राह्यायणेन* पदान्तमविशेषेणोपोत्तमात् पदात् प्रतीयात्** (द्रा.श्रौ.१८.३.१३) इति परिभाषामुक्त्वा **श्यावाश्व त्रैशोके तेषां द्वे** (द्रा.श्रौ.१८.३.१३) इति द्व्यक्षरप्रतिहारं विधाय तस्य स्थानमपि

3. $S^{1-2}$ क्षुद्रकल्प for कल्प।
4. $S^{1-2}$ Om. क्षुद्रकल्पे।
6. A after कालयं ins. इति।
7. A after सफं ins. इति।
15. $S^{2}$ तदपेक्षजगतीश्रुतिः, $S^{1}$ तदपेक्षा जगतीश्रुतिः for तदपेक्षो वा अतिजगतीवादः।
17. $S^{1-2}$ अष्टाक्षरौ for अष्टकौ।
18. A अस्तु for स्यात्।
20. A Om. त्रैशोके . . . तथैव।



**श्यावाश्वत्रैशोकयोः पदान्त** (द्रा.श्रौ.१८.४.३) इत्युक्तम्। तथैव **त्रैशोकमुतो हाइ** (का.श्रौ. ) इति *कात्यायनः*। तस्माज्जगत्येव उत्तरे उपरिष्टाद्बृहत्यौ। **धर्ता दिवः पवते कृत्व्यो रसः** (सा.५५८) यद्यपि धर्तेत्येषा **त्रिष्टुबिवः** भवति। तथापि व्यूढद्वादशाहदशरात्रस्य **गायत्री त्रिष्टुभः त्रिष्टुब् जगत्याः, जगती गायत्र्यास्तानि व्यौहन्** (तां.ब्रा.१०.५.१३) इति ब्राह्मणे लक्षणमुक्तम्। **तत्र छन्दांसि वा अन्योन्यस्य लोकमभिध्यायन्** (तां.ब्रा.१०.५.१३) इत्युपक्रमात् सप्तमाष्टमनवमेषु अहस्सु त्रिष्टुप् गायत्र्याः स्थानं भजते। गायत्री त्रिष्टुभः। त्रिष्टुब् जगत्याः इति व्यूहसंभवात् दाशरात्रिकस्याष्टमस्याह्नो माध्यंदिनपवमानान्त्याया जगतीत्वात् धर्तेत्यस्यास्तत्र पाठाज्जगतीत्वं तावन्निश्चितम्। तत्सिद्ध्यर्थं पादानां द्वादशाक्षरपादविकारत्वं परिभाषावशाद् द्रष्टव्यम्॥ ४॥

## अथ यत्रोत्तमोऽष्टाक्षरस्तां ज्योतिष्मतीत्याचक्षते ॥ ५ ॥

**तत्त्व०** - **अथ यत्र** जगत्यामुत्तमः पादः **अष्टाक्षरो** भवति **तां ज्योतिष्मतीं** जगतीमाहुः। तथा च *पिङ्गलः* - **एकेन त्रिष्टुप् ज्योतिष्मती** (पिं.छ.सू.३.५०) इति। एकेन अष्टाक्षरपादेन युक्तायाः त्रिष्टुभो ज्योतिष्मतीत्वमभिधाय जगत्या अपि अष्टाक्षरपादयोगे ज्योतिष्मतीत्वमुक्तम्। **तथा जगती** (पिं.छ.सू.३.५१) इति। अत्रैकस्यैवोत्तमपादस्याष्टाक्षरतयावशिष्टेषु चत्वारिंशदक्षरेषु पादक्लृप्तिरूहनीया॥५॥

**छन्दो०** - **अत्र** यद्यपि चतुष्पदा द्वादशाक्षरपादेत्यनुवर्तते तथापि **उत्तमोऽष्टाक्षर** इति वचनात् तद्व्यतिरिक्ताः पादास्त्रयो द्वादशाक्षराः भवन्ति।

4. $PS^{1-2}$ Om. द्वादशाह।
5. PA after गायत्र्याः ins. इति।
5. $S^{1}$ व्यौहन्ति for व्यौहन्।
8. $S^{1-2}$ Om. भजते।
11. A trans. परिभाषावशाद् after द्रष्टव्यम्।
14. $S^{1-2}$ Om. पिङ्गलनागेन for पिङ्गलः।
18. $PS^{2}$ चत्वारिंशति for चत्वारिंशद्।
18. $S^{1}$ स्थितिरि (हो) हनीया for क्लृप्तिरूहनीया।
20. $S^{1-2}$ Om. भवन्ति।

तदुक्तं यजुर्वेदसर्वानुक्रमणीकृता- **द्वादशाक्षरास्त्रयोऽष्टकश्च जगती ज्योतिष्मती** इति । एवंभूता ज्योतिष्मती जगतीत्येवेति एतच्छन्दोविचितिकारा **आचक्षत** इत्यर्थः। ज्योतिष्मती त्रिष्टुबिति बह्वृचाः। यथाह वररुचिः त्रिष्टुबधिकारे **द्वादशिनस्त्रयोऽष्टकश्च ज्योतिष्मती** (ऋ.अ.१.९.७) इति। **मन्ये वां द्यावापृथिवी सुभोजसौ** (सा.६२२) **इमं न उपस्थं मधुना संसृजामि** (मं.ब्रा.१.१.३) ॥५॥

**पञ्चपदापि भवति त्रयोऽष्टाक्षरा द्वौ द्वादशाक्षरौ ॥ ६ ॥**

तत्त्व० - **पञ्चपदापि भवति** जगती । तस्याः पादानाह - **त्रयोऽष्टाक्षरा द्वौ द्वादशाक्षरा**विति इयं महासतोबृहतीति बह्वृचाः। तथा च सर्वानुक्रमणी - **अष्टिनस्त्रयः स्वौ च द्वौ महासतोबृहती** (ऋ.अ.१.१०.२) इति। उदाहरणम् **आ यः पप्रौ भानुना** (ऋ.६.४८.६) इति॥ ६ ॥

छन्दो० - निगदेन व्याख्यातम्। महासतोबृहतीति बह्वृचाः। यथाह *वररुचिः*- **अष्टिनस्त्रयः स्वौ च महासतोबृहती** (ऋ.अ.१.१०.२) इति। उदाहरणं बाह्वृच्ये **अस्मा ऊ षु प्रभूतये** (ऋ.८.४१.१) **आयः पप्रौ भानुना** (ऋ.६.४८.६) इति॥ ६ ॥

**स एष समासः । आष्टपदतायाः क्रमते ॥ ७ ॥**

तत्त्व० - जगत्यां **स एष समासः** । न्यूनाक्षरविलक्षण-पादव्यत्यासविशेषः। **आष्टपदतायाः** अष्टपदतामभिव्याप्य **क्रमते** ॥७॥

छन्दो० - **स एष** जगतीसमावेशः अष्टपादपर्यन्तमधिक्रियते इत्यर्थः ॥ ७ ॥

**सैषैवं सती विष्टारपङ्क्तिः प्रवृद्धपदा ॥ ८ ॥**

13. A after बह्वृचाः adds : आहुः।
17. S[1-2] P प्रतिक्रामति for क्रमते।
19. AS[2] पादाविति शेषः for पादव्यत्यासविशेषः।
19. S[1] after क्रमते ins. वर्तते।
20. S[2] कृत्य for क्रियते।



तत्त्व० - एवं भूतायास्तस्या नामधेयमाह - **सैषेति एवं सती** अष्टपदा सती जगती विष्टारपङ्क्तिः प्रवृद्धपदेति नाम॥ ८॥

छन्दो० - षट्पदेति वक्ष्यमाणमाकृष्यते । **सैषा** जगती षडक्षरसप्ताक्षराष्टाक्षरनवाक्षरदशाक्षरा **एवं** प्रकर्षेण वृद्धपादयुक्ता **सती विष्टारपङ्क्तिर्भवति**। तत्रैवं पादक्रमः। आद्यावष्टाक्षरौ ततः सप्तकः षट्कः दशको नवकश्च। तदुक्तम् ऋग्वेदसर्वानुक्रमण्याम्। यथा- **अष्टकौ सप्तकः षट्को दशको नवकश्च** (ऋ.अ.१.१०.३) इति। उदाहरणं बाह्वृच्ये - **त्रिःसप्त विष्फुलिङ्गका** (ऋ.१.१९१.१२) ॥ ८॥

**षट्पदापि भवति अष्टाक्षरपादा**

**उभे यदिन्द्ररोदसी** (सा.३.७९) इति ॥ ९ ॥

तत्त्व० - **षट्पदापि भवति** जगती। अत्रोदाहरणम् - **उभे यदिन्द्र रोदसी** (सा.३७९) इति। एनां महापङ्क्तिरित्याह *शौनकः* - **महापङ्क्ति षडष्टकाः** (ऋ.प्रा.१६.७५) इति॥ ९॥

छन्दो० - **अष्टाक्षरपादयुक्ता षट्पदापि** जगती भवति । स्वयमेवोदाहरति - **उभे यदिन्द्र रोदसी** (सा.३७९) इति। इदमपि - **यशो मा द्यावापृथिवी** (सा.६११) इति। एतत्सूत्रविषयां पूर्वसूत्रविषयां च जगतीं महापङ्क्तिरिति बह्वृचाः। तदुक्तं तत्सर्वानुक्रमण्याम् - **अष्टकौ सप्तकः षट्को दशको नवकश्च षडष्टका वा महापङ्क्तिः** (ऋ.अ.१.१०.३) इति ॥ ९॥

**एतानि खलु सप्त चतुरुत्तराणि छन्दांऽसि**

**व्याख्यातानि । प्रथमं त्वेवात्र**

**न्याय्यं पथ्यं विद्यात् ॥ १० ॥**

तत्त्व० - पथ्यान्येवाग्रे (१.२२) इति प्रतिज्ञातमर्थमुपसंहरति - एतानीति। सर्वेषामपि न्याय्यत्वे पथ्यत्वे च प्राप्ते आह - **प्रथममिति प्रथमं त्वेवात्र न्याय्यं पथ्यं विद्यात्** ॥ ११ ॥

4. S[1-2] Om. एवं।

अत्र चतुर्विंशत्यक्षरा गायत्रीत्यारभ्य **उभे यदिन्द्र रोदसी** इत्येवमन्ते सूत्रे उक्तेषु छन्दःसु मध्ये **प्रथमं प्रथमं त्वेव** छन्दो **न्याय्यं** न्यायादनपेतं **पथ्यं** पथि सर्वत्र यज्ञमार्गे प्रयोगार्हं विद्यात्। इतरत्तु यत्र वचनमस्ति तत्रैव प्रयोज्यमिति भावः॥ १०॥

**छन्दो० - एतानि . . . विद्यात्** इति। एतानि गायत्र्यादीनि जगत्यन्तानि **चतुरुत्तराणि सप्त छन्दांसि व्याख्यातानि** उक्तानि खलु। अत्र ककुबुष्णिह्यन्तर्भावः। **एकं छन्दः ककुबुष्णिहौ** (ष.ब्रा.१.३.१२) इति श्रुतेः। अतो न सप्तत्वविरोधः। अक्षरपङ्क्तेरपि पङ्क्तित्वात् अभिकृत्यपेक्षया चतुरुत्तरत्वात् च न सप्तत्वविरोधः। **अत्र एषु छन्दःसु मध्ये प्रथमं प्रथमं** यच्छन्द उक्तं गायत्रीषूष्णिक्षु च त्रिपदा अनुष्टुप्सु चतुष्पदा बृहतीषु उपोत्तमा द्वादशाक्षरा पङ्क्तिषु। पङ्क्तिषु पञ्चपदा। त्रिष्टुप्सु चतुष्पदा एकादशाक्षरपादा। जगतीषु चतुष्पदा द्वादशाक्षरपादा। तदेव **न्याय्यम्**। यत्र यत्र ब्राह्मणादौ गायत्र्यादयो विधीयन्ते तत्र सर्वत्र उत्सर्गतो **विद्यात्**। न्याय्यशब्द औत्सर्गिकवचनः। तथा च शप औत्सर्गिकत्वेन **न्याय्यविकरणा भूवादय** इति वैयाकरणव्यवहारः। पथ्यसंज्ञं च **विद्यात्** जानीयादित्यर्थः। पथ्यसंज्ञायाः प्रयोजनमन्तस्थेति पथ्यस्थेति व्यवहारः। यद्यपि विधृत्यादयोऽपि सप्तचतुरुत्तरास्तथापि सप्तचतुरुत्तराणि व्याख्यास्यामो व्याख्यातानीत्युपक्रमोपसंहारयोः प्रयोजनम्। चतुरुत्तरैरेव छन्दोभिरेतस्यामित्यादावेतेषामेव परिग्रहः। ब्राह्मणादिषु गायत्र्यादिविधयस्तु **गायत्रीषु**

2. $S^1$P एवात्र for त्वेव।
6. $S^1$ after व्याख्यातानि adds : प्रथमम्।
8. A कृदिछन्दो for कृत्य।
12. $S^{1-2}$ after न्याय्यम् ins. गायत्रम्।
15. $S^1$ वैयाकरणानां व्यवहारः PA वैयाकरणा for वैयाकरणव्यवहारः।
16. $S^2$ पथ्यस्य for पथ्यस्थ।
18. $S^2$ छन्दस्यभिमत समित्यादावेति तेषामेवेति for छन्दोभिरेतस्यामित्यादावेतेषामेव।
18. A एतव्यम् for एतस्याम्।
19. A ब्राह्मणादि for ब्राह्मणादिषु।
19. $S^{1-2}$ Om. गायत्र्यादि।



ब्रह्मवर्चसकामायोक्थानि प्रणयेयुर्गायत्र्यां ब्रह्मसामानुष्टुभ्यच्छावाकसाम (तां.ब्रा.८.१०.१) इत्यादिगौतमचतुष्टोमाश्वमेधयोः तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति (तां.ब्रा.२१.४.५) इति श्रूयते। अत एव तत्र कल्पसूत्रम् - **अयं पूषा रयिर्भग** (सा.८१८) इति **तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति** (आ.क.५.५.१)। **पवस्व वाजसातये** (सा.१०१०) **इति तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति** (आ.क.६.११.१) इति चत्वारि त्रिन्त्यहानि अग्निष्टोममुखानीत्यादिनोक्ते एकान्नपञ्चाशद्रात्रविधृतीनामसत्रे **गायत्रीषु जराबोधीयमुष्णिक्षु श्रुध्यम् अनुष्टुप्सु नानदं बृहतीषु रथन्तरं पङ्क्तिषु रायोवाजीयं त्रिष्टुप्स्वौशनं जगतीषु कावम्** (तां.ब्रा.२४.११.७) इति श्रूयते। अत एव कल्पकारः - **जरोबोध तद्विविड्ढि** (सा.१६५७-५९)। **प्रतिष्या सूनरी** (सा.१७१९-२१)। **एषो उषा अपूर्व्या** (सा.१७२२-२४) इति। **एतासु गायत्रीषु जराबोधीयं संधिषाम** (आ.क.९.३८.१) इति च। **अग्ने वाजस्य गोमतः** (सा.१५.६५-६७)। **उषस्तच्चित्रमा भर** (सा.१७२५-२७)। **अश्विना वर्तिरस्मत्** (सा.१७२८-३०) **इत्येतासूष्णिक्षु श्रुध्यं संधिषाम** (आ.क.९.३९.१) इति च। **प्रत्यस्मै पिपीषते** (सा.१४३४-३७) इति। **नानदं षोडशिसाम** (आ.क.८.४०.१) इति च। **अग्निं तं मन्ये यो वसुः** (सा.१७३१-३३)। **महे नो अद्य बोधय** (सा.१७३४-३६)। **प्रति प्रियतमꣳरथम्** (सा.१७३७-३८) **इत्येतासु पङ्क्तिषु रायोवाजीयं संधिषाम** (आ.क.९.४३.१) इति च। **अबोध्यग्निः समिधा जनानाम्** (सा.१७४०-४२)। **इदं श्रेष्ठं ज्योतिषां ज्योतिरागात्** (सा.१७४३-४५)। **आभात्यग्निरुषसामनीकम्** (सा.१७४६-४८) **इत्येतासु त्रिष्टुप्स्वौशनं संधिषाम** (आ.क.९.४५.१) इति च। **जनस्य गोपा अजनिष्ट जागृविः**

1. A Om. गायत्र्यां . . . अच्छावाकसाम।
3. A Om. श्रूयते।
4. A Om. अयं . . . करोति।
7. $S^2$ Om. अहानि।
15. $S^2$ श्रुध्ये for श्रुध्यं।

(सा.९०१-३)। **एता उत्या उषसः केतुमक्रत** (सा.१७४८-५१)। **अबोध्यग्निर्ज्म उदेति सूर्यः** (सा.१७५२-५४) इत्येतासु जगतीषु कावं **संधिषाम** (आ.क.९४७-१) इति चाकल्पयत्। तत्र पञ्चदशभ्यः उत्तरमहः **अतिरात्रः षोडशिमानविक्लृप्त** (आ.क.९.४१.१) इति चाह पृष्ठव्यावृत्त्यर्थम्। तत्र भाष्यकारः **संधिषामाभिप्रेत्य बृहतीषु रथन्तरमिति श्रुतावुक्तमित्याह**। तत्र तु **एना - प्रत्यु-इमा उवा** (र.द.२.४) इति रथन्तराणि संधिषामानि। तानि तु प्रकृत्यर्थं ककुबुत्तराण्यधीतानि। एतदर्थं तु सर्वबार्हतान्यूहनीयानि इति भान्ति। सामश्रौतिनः प्रष्टव्याः॥ ११॥

**एतासामेव द्विपदा भवन्ति ॥ १२ ॥**

तत्त्व० - अथ द्विपदाच्छन्दो वक्तुमुपक्षिपति एतासामिति। **एतासामेव** गायत्र्यादीनामन्यतमत्॥ १२॥

छन्दो० - गायत्र्यादिजगत्यन्तानां संबन्धिन्यो द्विपदा अपि **भवन्ति**॥१२॥

**यत्र द्वावष्टाक्षरौ सा गायत्र्याः ॥ १३ ॥**

तत्त्व० - **यत्र** क्वचित् **द्वावष्टाक्षरौ** पादौ **सा गायत्र्याः** द्विपदा। तस्या ऋचो द्विपदागायत्रीच्छन्द इत्यर्थः। एवमुत्तरत्रापि व्याख्येयम्। उदाहरणानि **- एष ब्रह्मा य ऋत्वियः** (सा.४३८) **विश्वतो दावन्** (सा.४३७)। **उषा अप स्वसुष्टमः**। (सा.४५१)। **ब्रह्माण इन्द्रं महयन्तः** (सा.४३९)। **प्रमे पतियानः** (सा.मन्त्र.ब्रा.१.१) इति॥

छन्दो० - ता एव द्विपदा आह- **यत्र द्वाविति**। **यत्र** ऋचि **द्वा**वपि पादाव**ष्टाक्षरौ** भवतः **सा** गायत्रीसंबन्धिद्विपदा भवति। द्विपदा गायत्रीति यावत्। उदाहरणम् - **एष ब्रह्मा य ऋत्वियः** (सा.४३८)। **विसुतयो यथा पथा** (सा.४५३)॥ १३॥

**यत्र द्वादशाक्षराष्टाक्षरौ सा विष्टारपङ्क्तेः ॥ १४ ॥**

3. A after च adds : कल्पकारः।
3. $S^{1-2}$ Om. तत्र . . . चाह।
14. P अष्टाक्षरपादौ for अष्टाक्षरौ पादौ।
20. A Om. अपि।



**यत्र द्वादशेति**। यत्र यथाक्रमं द्वादशाक्षरपादाष्टाक्षरपादौ अष्टाक्षरपादद्वादशाक्षरपादौ वा **सा** द्विपदा विष्टारपङ्क्तिर्भवति। आद्यद्वादशाक्षरा - **विश्वतो दावन् विश्वतो न आभर** (सा.४३७)। **सदा गावः शुचयो विश्वधायसः** (सा.४४२)। आद्याष्टाक्षरपादा - **अग्ने त्वं नो अन्तमः** (११०७-९) तृचमेवंभूता द्विपदा। द्विपदा विराज इति बह्वृचा प्राहुः। यथाह *वररुचिः* - **विंशतिका द्विपदा विराजः** (ऋ.अ.१.१२.८) इति। तैत्तिरीया अपि द्विपदा विराज इत्येवाहुः। यथाह तत्सर्वानुक्रमणीकारः - **विराट् द्विपदाष्टकद्वादशकाभ्याम् इति**॥ १४॥

**यत्रैकादशाक्षरौ सा त्रिष्टुभः ॥ १५ ॥**

**यत्रैकादशेति**। यत्र द्वावप्येकादशाक्षरपादौ सा द्विपदा त्रिष्टुप् भवति। **ब्रह्माण इन्द्रं महयन्तो अर्कैः** (सा.४३९)। **अनवस्ते रथमश्वाय तस्थुः** (सा.४४०)। **ब्रह्माण इन्द्रम्** (सा.४३९) इत्यत्र द्वे सामनी अधीते। **हाउस्वरता** (ग्रा.२.४३९.१) **हाउ अभि स्वरता** (ग्रा.२.४३९.२) इति **अनवस्ते** (सा.४४०) इत्यत्र एकं समाधीतम्। **हाउ स्वरता** (ग्रा.२.४४०.१) इति। तदुपरि **औहोइशम्पदाम्** (ग्रा.२.४४१.१) इत्यधीतम्। एतच्चतुर्णां साम्नामार्षेयब्राह्मणे - **प्रजापतेः श्लोकानुश्लोकानि चत्वारि** (आ.ब्रा.४.१०.३) इति तेषां श्लोकानुश्लोकसंज्ञा विहिता। तेषु मध्ये महाव्रते श्लोकानुश्लोके द्वे सामनी परिगाणेषु परिमात्सु सामसु मध्ये विनियुज्येते। तथा च ब्राह्मणम् - **श्लोकानुश्लोकाभ्यां हविर्धाने उपतिष्ठन्ते** (तां.ब्रा.५.४.१०) इति। तथा च प्रतिहारसूत्रम् - **श्लोकानुश्लोके परिगाणेषु**

1. A Om. यथाक्रमं;
A द्वादशाक्षराष्टाक्षराष्टाक्षरद्वादशाक्षरौ for द्वादशाक्षर . . . द्वादशाक्षरपादौ।
5. $S^{2}$ द्विपात् for द्विपादाः;
A Om. प्राहुः।
7. A च for अपि।
14. $S^{1-2}$ Om. हाउ स्वरता इति।
17. A विहितेषु for विहिता। तेषु;
A व्रतक्रतौ for व्रते।

(प्र.सू.७.३०) इति । तत्र *वरदराजेन* प्रतिहारभाष्ये **ब्रह्माण इन्द्रम्** (सा.४३९) इत्येते श्लोकानुश्लोके श्लोकयताऽ२३४५। **श्लोकाऽ२३४ः। इति** निधनलिङ्गात् इत्युक्तम्। कल्पभाष्येऽपि तेन *वरदराजेन* **हाउ स्वरता ब्रह्माण इन्द्रम्** इति श्लोकेन हविर्धाने उपतिष्ठेरन्। **पुरस्तात् प्रत्यङ्मुखाः। हाउ अभिस्वरतेति अनुश्लोकेन पश्चात् प्राङ्मुखाः** (आ.क.२.११.७) इत्युक्तम्। ब्राह्मणभाष्ये तु **हाउ स्वरता ब्रह्माण इन्द्रम् - हाउ स्वरता अनवस्ते इति श्लोकानुश्लोकाभ्याम्** (तां.ब्रा.५.४.१०) इत्युक्तम्। अत्र विचार्यते। किं वरदराजोक्तो न्यायः। उत ब्राह्मणभाष्योक्तो न्यायः। उच्यते। ब्राह्मणभाष्यकारोक्त एव न्यायः। कुत एतत्। **प्रजापतेः श्लोकानुश्लोकानि चत्वारि** (आ.ब्रा.४.१०.३) इति ब्राह्मणेन विहिता संज्ञा चतुर्णां मध्ये आद्ययोः श्लोकमिति संज्ञा प्रवर्तते तृतीयचतुर्थयोरनुश्लोकमिति संज्ञा प्रवर्तते। **प्रजापतेर्धर्मविधर्माणि चत्वारि** (आ.ब्रा.४.९.३) इति ब्राह्मणोक्तधर्मविधर्मसंज्ञावत्। तद्यथा - **पवस्व सोममहान्त्समुद्रः** (सा.४२९) इत्यत्र द्वे सामनी। **पवस्व सोमा** (ग्रा.२.४२९.१)। **ओहोवा। ओहोवा।** (ग्रा.२.४२९.२) इति। **पवस्व सोम महे दक्षाय** इत्यत्र द्वे सामनी। **ओहोवा। ओहोवा** (ग्रा.२.४३०.१) **पवस्वसोमा** (ग्रा.२.४३०.२) इति। तत्र चतुर्णां मध्ये आद्ययोर्धर्म इति संज्ञा प्रवर्तते। अन्त्ययोर्विधर्मेति संज्ञा। अत एव तथैव **औहोवेति** धर्म **ओहोवेति** विधर्म च ऊहे अधीयते। किं च लिङ्गात् आद्ययोः श्लोकमिति संज्ञा भवति।

---

2. A Om. श्लोके . . . इन्द्रमिति।
8. A न्याय्यः for न्यायः।
9. $S^{1-2}$ Om. कुत एतत्।
11. $S^{1-2}$ Om. प्रवर्तते।
14. $S^{1-2}$ trans. द्वे सामनी after इति and ins. thereafter अधीते।
15. $S^{1-2}$ trans. द्वे सामनी after इति and ins. thereafter अधीते।
17. A Om. मध्ये;
A Om. प्रवर्तते।
18. A after संज्ञा ins. भवति।
19. $AS^2$ अधीयते for अधीयेते।
$S^1$ लिङ्गादि for लिङ्गात्।
A Om. भवति।



क्रमादन्त्ययोरनुश्लोकमिति संज्ञा न्याय्या। **क्रमलिङ्गाभ्यां** च (प्र.सू.२.७) इति परिभाषावचनात्॥ १५॥

**यत्र द्वादशाक्षरौ सा जगत्याः ॥ १६ ॥**

**यत्र द्वादशेति**। यत्र द्वावपि पादौ द्वादशाक्षरपादौ **सा** द्विपदा जगती भवति। **प्र मे पतियानः पन्थाः कल्पताम्** (मं.ब्रा.१.१.९)। **प्रास्याः पतियानः कल्पताम्** (मं.ब्रा.१.१.९) **प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यम्** (सा.१४९४) **इत्यामहीयवम्** (ऊ.ए.५२१) द्विपदा गायत्रीति बह्वृचाः आहुः। **द्वौ पादौ जागतौ द्विपदा गायत्री** (तु.ऋ.प्रा.१६.२६) इति *शौनक*वचनात्॥ १६॥

**विषमपदाः। शं पदम्** (सा.४४१) **प्रव इन्द्राय** (सा.४४६) **विश्वस्य** (सा.४५०) **इमा तु कम्** (सा.४५२) **इति ॥ १७ ॥**

(स्वर: शं पदम् — २ ३ २; प्रव इन्द्राय — २ ३ १ २; विश्वस्य — १ २ ३; इमा तु कम् — ३ २उ ३)

तत्त्व० - शं पदम् इत्यादीनां चतुर्णाम् ऋचां विषमपदाच्छन्दः॥ १४॥

छन्दो० - **शं पदं मघवं रयीषिणे** (सा.४४१) **प्र व इन्द्राय वृत्र हन्तमाय** (सा.४४६) **विश्वस्य प्रस्तोभा पुरो वासन्** (सा.४५०) **इमा नु कं भुवना सीषधेम** (सा.१११२) इमानुकमित्युपलक्षणम्। **आदित्यैरिन्द्र** (सा.१११२) इत्यस्य अपि ग्रहणम्। एता ऋचो विषमपदा द्विपदा भवन्ति॥ १४॥

**नवाक्षरचतुर्दशाक्षरावेकादशाक्षरत्रयोदशाक्षरौ षडक्षर दशाक्षरावेका-दशाक्षराष्टाक्षरौ ॥ १८ ॥**

---

8. $S^{1-2}$ पतिर्यानः for पतियानः।
$S^1$ before शौनक adds : बह्वृच।
21. $S^2P$ षोडश for षड्।

तत्त्व० - विषमं पदं यस्याः सा विषमपदेति योगार्थान्वयमभिप्रेत्य तासां क्रमेण विषमपदतां दर्शयति नवाक्षरेति।

**छन्दो० - शं पदमित्यस्याः** पादौ नवाक्षरचतुर्दशाक्षरौ भवतः। एषा विषमपदा जगती भवति। तदुक्तम् - **नवकचतुर्दशाभ्यां द्विपदा जगती** इति। **प्रव इन्द्राय** (सा.४४६) इत्यस्याः पादौ एकादशाक्षरत्रयोदशाक्षरौ भवतः। एषा विषमपदा द्विपदा जगती भवति। तदुक्तं **त्रैष्टुभत्रयोदशाभ्यां जगती द्विपदेति**। **विश्वस्य** (सा.४५०) इत्यस्याः षडक्षरदशाक्षरौ एषा विषमद्विपदा गायत्री भवति। **षट्कदशकाभ्यां द्विपदा गायत्रीति** वचनात्। **इमानुकम्** (सा.४५२) **आदित्यैरिन्द्र** (सा.११०६) इत्यनयोरेकादशाक्षराष्टाक्षरौ पादौ भवतः। **इमानुकमादित्यैरिन्द्र** इत्येते विषमद्विपदे त्रिष्टुभौ भवतः। **अथ यत्रोत्तमोऽष्टाक्षरस्तां ज्योतिष्मती** (नि.सू.१.४.२) इति त्रिष्टुबधिकारे दर्शनात् तदवयवत्वादेतयोः पादयोः। **इमानुकमित्येषा** द्विपदा विराट्। **आदित्यैरिन्द्र** इत्येषा द्विपदा त्रिष्टुबिति बह्वृचाः प्राहुः। तदुक्तं तत्सर्वानुक्रमणीकृता-**इमा नु कं भुवन-** आप्त्यः **साधनो वा भौवनो वैश्वदेवं द्वैपदं त्रैष्टुभं विराड्** (ऋ.अ.२.६४.१५७) इति। तस्मादिमा नु कमित्यस्या एवं विषमपादत्वात् **होइहा। इमानुकम्** (र.द.२०) इति भद्रसाम्नि एवमेव पदनिधनं भवति। तथाहि इदं साम सर्वपृष्ठाप्तोर्यामोक्थ्ये सौभरस्य भर्गस्तवनकाले **होइहे**त्यादिवान्तस्तोभाः प्रतिपादमाहर्तव्याः। **आद्यन्तस्तुब्धेषु पदाय पदाय स्तोभेत्** (द्रा.श्रौ.१०.१.७) इति वचनात्। एवं सति पादौ निधने भवतः। **वाक् चेत् स्तोभान्तोऽनन्तरः पुरस्ताद्वृद्धः क्रुष्टो वाकारः स्वरितं वार्चिकं**

---

4. A Om. विषमपदा . . . एषा।
12. $S^{1-2}$ अधिकृत्योक्तत्वात् for अधिकारे दर्शनात्।
12. A पदयोः for पादयोः।
14. $S^1$ आप्यः, $S^2$ अपेत्य for आप्त्यः।
15. A त्रैपादं for द्वैपदं।
20. $S^{1-2}$ Om. वचनात्।



वा (द्रा.श्रौ.२०.३.३३)। इत्युपायान् प्रकृत्य तेभ्यो **यन्निगदवर्त्त्यनन्तरमार्चिकं तेन सहोपेयुरनादेशे** (द्रा.श्रौ.२०.३.३३) इति द्राह्यायणवचनात्। तस्मादेवं प्रयोगगानम्। **होइहा (त्रिः) इहोइहा (त्रिः)। औहोऽ२। इहा (द्विः)। औहोइहाऽ३४। औहोवा। इमानुकं भुवनां सीषधेमाऽ३। इहा।** पुनरादाविव द्वादशपर्वाणि। **इन्द्रश्च विश्वेदेवाः। इहा।** पुनरप्यादाविव द्वादश पर्वाणि। **एऽ३। भद्रम्।** एवमुत्तरयोः स्तोत्रीययोः। अस्य प्रस्तावादिभक्तिनिर्णयस्तु **भद्रश्रेयसोरष्टमैः स्तोभैः प्रतिहारः** (प्र.हा.सू.१२.१६) इत्यत्र दर्शितः प्रतिहारभाष्यकारेण। तत्र प्रस्तावविषये **होइहादयो वान्ताः स्तोभाः प्रस्तावः** (भाष्यम् प्र.सू.१२.१७)। इत्येतावन्मात्रमुक्तम्। प्रस्तावाङ्गं निधनमिति नोक्तम्। **स्तोभ उपायान्तः पदनिधनेषु। निधनं च तदङ्गं स्यात्** (पु.सू.१०.११.१३,१४) इति प्रस्तावखण्डिकायाम् उक्तत्वात् पुष्पकारेण। अस्यार्थस्तु **सौमित्रम्। औहोहाइ।** (प्र.सू.७.९) इत्यत्र *वरदराजेन* **वागाद्युपायान्तः स्तोभः पदनिधनेषु प्रस्तावः। ततः परं च निधनं प्रस्तावाङ्गमिति** (उक्तम्)॥

ननु सर्वप्रयोज्यं निधनम्। तत् किमुच्यते प्रस्तावाङ्गमिति। अत्राहुः। प्रस्तावान्ते चोदितं कुशाविधानमुद्गातुरोंकारवचनं च प्रस्तावात् परं निधनमप्युक्त्वा कर्तव्यम्। न तु निधनात् पूर्वमिति प्रदर्शनार्थं **निधनं च तदङ्गं स्यात्** (पु.सू.१०.११.१४) इत्युक्तमिति तदङ्गवचनस्य **प्रयोजनमुक्तम्**॥

---

1. $S^2$ उपायवान् for उपायान्;
   $S^2$ Om. प्रकृत्य।
5. A Om. पुनर्।
8. A transp. दर्शितः after कारेण।
10. $S^{1-2}$ Om. इत्येतावन् . . . नोक्तम्।
12. AP फुल्लवचनम् for उक्तत्वात् पुष्पकारेण।
16. $S^1$ चोदितः for चोदितम्;
    $S^{1-2}$ निधान for विधानं।
17. $S^2$ उक्तत्वात् for उक्त्वा।

ननु पुष्पभाष्यकारेण *अजातशत्रुणा* तदङ्गवचनस्यैवं प्रयोजनं नोक्तम्। तस्मान्निधनस्य प्रस्तावाङ्गवचनं निधनत्वनिवृत्त्यर्थं स्यादिति चेत्। अत्रोच्यते। निधनत्वमप्यस्ति। कुतः ?

**आर्चिकं निधनं न्याये स्तौभिकं वा यदक्षरम्।**
**क्रुष्टाक्रुष्टं भवेत्स्वार्यमन्तोदात्तं वृधे स्वरम्॥**

**मणाजनं सदद्योनामावियशसि विदेऽ५सुजित्** (पु.सू.९.२.१०.११) इत्यादिपुष्पश्लोकोक्तप्रकारेण सौमित्रभद्रादिषु निगदवर्तिनां स्वरितान्तानां प्रथमस्वरादिसंप्रसारणस्य प्रचयानुदात्तानां द्वितीयस्वरादिसंप्रसारणस्य मणाञ्जनादीनामुदात्तानां च वृधेस्वरस्य च। एवं त्रिविधनिधनस्वराणाम् ऊहरहस्ययोरध्ययनदर्शनात्। तस्मान्निधनत्वमप्यस्ति।

ननु श्रेयः सामनि **इयां। पवस्वसोंमनन्दयाऽ३न्** (र.क्षु.१९९) इत्यत्र निधनस्वराध्ययनाभावात् निधनत्वं न स्यादिति चेत्। न तत्राप्येतद्वचनानुसारेणाध्ययनं कर्तव्यमेव। तर्हि यदि निगदवर्तिनामेवं स्वरः स्यात् तदा **यद् द्याव इन्द्र ते शतम्** (सा.२७८) इत्यत्राधीतं पञ्चनिधनं वैरूपं सर्वप्रष्ठाप्तोर्यामे श्यैतस्य गर्भस्तस्य तृतीयचतुर्थपादौ चतुर्थपादादूर्ध्वमारण्यकेऽधीयमाने **दिशं विश२हस्**। **अश्वाशिशुमतीति** देवते च व्यत्यासेन प्रयुज्येयाताम्। **वैरूपे पददेवते व्यत्यस्येत्** (प्र.सू.११.४) इति *कात्यायन*वचनात्। तत्रापि पूर्वं देवता वक्तव्या पदं वा इत्याकाङ्क्षायां पूर्वं देवता पश्चात् पदमिति क्रमः। कुतः। **एतद्देवतापदं देवतापदमिति वैरूपे निधनानि** (द्रा.श्रौ.२०.१.२५) इति

1. $S^{1-2}$ Om. अजातशत्रुणा।
2. A प्रस्तावाङ्गत्व for प्रस्तावव वचनं।
3. $S^{1-2}$ before अत्र adds : न।
6. $S^{1}$A मणाञ्जनं for मणाजनं।
10. $S^{1}$ प्रदर्शनात् for दर्शनात्।
12. A Om. न।
17. $S^{1-2}$ व्यत्यस्येत् for व्यत्यासेन प्रयुज्येयाताम्।
18. $S^{2}$ वचनम् for वचनात्।



***द्राह्यायण***वचनात्। तथैव रहस्ये सर्वे अधीयन्ते। तस्यैवं प्रयोगः। वान्तः प्रस्तावः। **कावश्रौतकक्ष** (पु.सू.१०.१०.१२) इत्यादिवचनात् ओवेत्यादयः स्तोभाः उद्गीथः। **दिशं विश२हस्** इति निधनम्। पुनरप्योवेत्यादयः स्तोभा उद्गीथः। तृतीयपादो निधनम्। पुनरपि त एव स्तोभाः प्रतिहारः। **अश्वाशिशुमती**ति निधनम्। पुनरपि त एव स्तोभाः उपद्रवः। चतुर्थः पादो निधनम्। पुनरपि त एव स्तोभाः उपद्रवः। **इट् इडे**ति निधनम्। **आइट्डे**त्येके। एवमुत्तरयोः स्तोत्रीययोः। अत्र **वाक् चेत् स्तोभान्तः** (द्रा.श्रौ.२०.३.३३) इति प्रकृत्य **तेभ्यो यन्निगदवर्त्यनन्तरम्** (द्रा.श्रौ.२०.३.३५) इति वचनात् तृतीयचतुर्थपादयोः निधनत्वम्। तत्र **पूर्वोक्तमार्चिकं निधन**मित्यादिपुष्पवचनात् **मध्येनिधनानि निगदवृत्तीनि प्रयोगवत् स्वाध्याये** (पु.सू.८.१८१) इति पुष्पवचनात् रहस्याध्ययनकाले प्रयोगकाले च यथायथं स्वरान्तं संप्रसारणवृधेस्वरौ भवतः इति चेत्। को वा नेति ब्रूयात्? तथैवाध्ययने प्रयोगेऽपि कर्तव्यावेव। एवमन्यत्रापि द्रष्टव्यानि। एवं विविच्य केनापि नोक्तम्॥

ननु सर्वक्रतुप्रकृतिभूतज्योतिष्टोमबहिष्पवमाने **उप-दवि-पवेति** गायत्रीच्छन्दसां नवानां स्तोत्रीयाणां षड्विंशब्राह्मणे **रेतस्या छन्दस्याः। प्राजापत्या देवतया** (ष.ब्रा.२.१.२७) इत्यादिना रेतस्यादीनि छन्दांसि श्रूयन्ते। अत एव कल्पभाष्यकारेण - **रेतस्या गायत्री त्रिष्टुप् जगत्यनुष्टुप् पङ्क्तिर्द्वे गायत्र्यौ। रथन्तरवर्णेति धुरां छन्दांसि** इत्युक्तम्। तन्न संगच्छते।

1. $S^{2}$ रहस्यं for रहस्ये।
4. A Om. इति।
7. $S^{2}$ आउद्३डेति for आइट्डेति।
9. A निधनत्वात् for निधनत्वम्।
10. A Om. मध्येनिधनानि . . . पुष्पवचनात्।
12. $S^{1-2}$ प्रयोगे for प्रयोगकाले;
A Om. यथं।
$S^{1-2}$ Om. को . . . ब्रूयाद्।
13. $S^{1-2}$ Om. अध्ययने प्रयोगेऽपि;
$S^{1-2}$ कर्तव्यम् for कर्तव्यौ।

गीते स्वतश्छन्दोयोगाभावात्। तदाह निदानकारः साम्नां छन्दोऽस्ति न वेति विचार्य **नास्तीति गौतमः**। अस्तीत्यन्ये। **यच्छन्दस्कायामृचि गीयते तदस्य छन्दः** (नि.सू.१.१३.१८.२०) इति। तत्रत्यऋचां गायत्रीत्वात् रेतस्यायां छन्दस्संज्ञाया अभावात्। अनुष्टुबादीनाम् अधिकाक्षरविषयत्वाच्च। तस्मात् कथं बहिष्पवमानस्य तानि छन्दांसि इति चेत्। अत्रोच्यते। रेतस्यायाः छन्दोव्यवहारः **चन्देरादेश्च छः** (उणादि ४.२१७) इति चदि आह्लादे इति धातोर्व्युत्पत्त्या गोत्राणामाह्लादकरत्वात् यौगिक एव। न तु योगरूढः। त्रिष्टुबादीनां ब्राह्मणादिविधिबलात् धूर्गानसमये उक्ताक्षराद्यभावेऽपि त्रिष्टुप्त्वाद्यारोप्य धूर्गानं कर्तव्यमेव। यद्वा डित्थबित्थादिवत् रेतस्यादीनां संज्ञा एव। तथाह ***धन्वी*** **अहिंकृता प्रथमा रेतस्या** (द्रा.श्रौ.३.४.२४) इत्यत्र **अहिंकृतैव प्रथमा रेतस्येत्युच्यते। संज्ञाकरणं व्यवहारार्थमिति। गीतिविकारा गायत्रस्य धुर** (द्रा.श्रौ.२१.३.१३) इत्यत्र च **रेतस्या नाम प्रथमा धूरुच्यते। तदन्वयादृगपि तथैवोच्यते। द्वितीया धूर्गायत्रीति ज्ञेया इत्येवं त्रिष्टुबादय** इति। एवमेव भूरादीनां सप्तव्याहृतीनां गायत्र्युष्णिगनुष्टुप् बृहतीपङ्क्तित्रिष्टुप्जगत्यः छन्दांसीति जपकाले प्रयोगः। सप्तानां छन्दसामारोपात्। आरोपस्तु आह्निकादौ विधिबलादेव केनापि प्रकारेण। भूरादीनां छन्दोलक्षणलक्षितत्वाभावाच्च। एवमेव गायत्र्याश्चम्पकन्यासादौ प्रत्यक्षरछन्दःस्वपि। तथा मन्त्रशास्त्रोक्तमन्त्रजपादावपि विधिबलादारोपादेव छन्दःप्रयोग इत्यङ्गीकर्तव्यः। प्रकारान्तराभावात्। अथवा वेदगत

1. S[1-2] Om. स्वतश्;
A तथाह for तदाह।
A नास्ति for न वा।
4. S[1]A त्रिष्टुब् for अनुष्टुब्।
A Om. अधिकाक्षर।
5. S[1-2] रेतस्यादीनां for रेतस्यायाः।
7. A Om. चन्देर् . . . न तु।
11. A आदौ for अत्र;
A उक्तसंज्ञा for उच्यते। संज्ञा
19. S[1] after अभावात् ins. च;
A Om. अथवा . . . प्रणीत



ऋङ्मन्त्राणामेव छन्दोविचितौ लक्षणान्युक्तानि। सप्तव्याहृतीनां गायत्र्याः प्रत्यक्षरच्छन्दःस्वपि मन्त्रशास्त्रोक्तमन्त्रच्छन्दःस्वपि महर्षिप्रणीततत्तद्विधिशास्त्रेण यद्यच्छन्दो विधीयते तस्य तस्य छन्दसस्तदेव लक्षणमित्यप्यङ्गीकर्तव्यम्। तदलं प्रसक्तानुप्रसक्त्या॥ १५॥

**तत्त्व०** - अष्टाक्षरादिपादयुक्तच्छन्दसां लक्षणमुक्त्वा दशाक्षरपादयुक्तस्य छन्दसो लक्षणमाह -

**दशाक्षरपादा विराज एकपदाप्रभृतयः**
**आ चतुष्पदाभ्यः॥ १९॥**

दशाक्षरः पादो यासां ता **दशाक्षरपादाः विराज एकपदाप्रभृतयः आचतुष्पदाभ्यः**, एकपदाविराट् तथा द्विपदा त्रिपदा चतुष्पदेति चतस्रो विराज इत्यर्थः। उदाहरणानि - **सुमन्मा वस्वी रन्ती सूनरी** (सा.१६४८)। **इन्दुः पविष्ट चारुर्मदाय** (सा.४३१)। **पिबा सोममिन्द्र मन्दतु** (सा.३९८)। **चक्रं यदस्य** (सा.३३१) इति॥ १६॥

**छन्दो०** - निगदेन व्याख्यातम्। एकपदा विराट्। **सुमन्मा वस्वीरन्ति सूनरी** (सा.१६५४)। द्विपदा शाखान्तरे। त्रिपदा विराट्। **पिबा सोममिन्द्र मन्दतु त्वा** (सा.३९८)। **प्र वो महे महे वृधे भरध्वम्** (सा.३२८)। चतुष्पदा विराट्। **चक्रं यदस्याप्सु वा निषत्तम्** (सा.३३१)। **त्वमिमा ओषधीः सोम विश्वाः** (सा.६०४)। **स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति न** (सा.१८६९) इति। एतां विराट्स्थानां त्रिष्टुबिति बह्वृचाः प्राहुः। यथाह वररुचिः - **नवकौ वैराजस्त्रैष्टुभश्च** (ऋ.अ.१.८.५) इति। षष्ठी विराट्स्थानेति तन्मते उत्तमपादस्य विकर्षेणैकादशाक्षरत्वं द्रष्टव्यम्॥ १९॥

3. A Om. विधि;
A यः for यद्यत्;
A Om. तद्;
5. S[1-2] Om. आदि
7. A before दशाक्षरपादा adds :- मप्युक्तम्। तस्मान्न तानि छन्दांसि
15. A मृग्या for शाखान्तरे
19. A आहुः for प्राहुः

**एकादशाक्षरपादा अपि त्रिपदा विराज इत्येवाचक्षते । यथा अग्निं नरः (सा.१३७३-७५) इति । अग्निं नर इति ॥ २० ॥**

**तत्त्व०** - दशाक्षरपादवदेकादशाक्षरपादा अपि **त्रिपदा विराज** एव । स्वयमेवोदाहरणं दर्शयति - **यथाग्निं नरः** (सा.१३६७-६९) इति । तथा च ब्राह्मणम् - **विराट्सु वामदेव्यमग्निष्टोमसाम भवति** (तां.ब्रा.१५.१२.१) इति द्विरुक्तिः पटलसमाप्त्यर्था ॥ २० ॥

*इति श्रीतातप्रसादविरचितायां **तत्त्वसुबोधिन्यां***
*निदानसूत्रवृत्तौ प्रथमपटले चतुर्थः खण्डः ॥ ४ ॥*

**छन्दो०** - स्पष्टोऽर्थः । द्विरुक्तिः पटलसमाप्तिसूचनार्था । तृचमेवोदाहरणम् - **त्रिपदा विराज** इति बहुवचननिर्देशात् द्वितीयायाम् ऋच्याद्यन्तयोः पादयोः तृतीयायां तु सर्वेषां पादानामेकादशाक्षरपाद-विकारत्वमवगन्तव्यम् ।

एतत्तृचसामाधिकृत्य द्वादशाहब्राह्मणे दशमेऽहनि **विराट्सु वामदेव्यमग्निष्टोमसाम भवति** (तां.ब्रा.१५.१२.१) इत्यत्र यदेकादशाक्षराणि पादानि तेन त्रिष्टुभ इति श्रवणात् उत्तमायामृचि **प्रेद्धो अग्ने दीदिहि पुरः** (सा.१३६९) इति पादविभागः । पुष्पसूत्रे **अःकारो वृद्धः पदगीतः** । **पादान्ते** (पु.सू.६.१.१) इत्यनेन पादान्त्यपुर इति शब्दस्य पदगानप्राप्तौ तदपवादत्वेन **पुरो नः प्रेद्ध इत्यत्र मराये** (पु.सू.६.१.१०) इति संधिगानविधानात् **मरायेऽभ्यास एकाक्षरस्त्रिरुक्तः पादान्ते सर्वत्र** (पु.सू.१०.१.८) इत्यनेन त्रिरभ्यासप्राप्तौ **अपुरो नः** (पु.सू.१०.१.९) इति

10. A सुस्पष्टः for स्पष्टोऽर्थः
12. A आवृत्तयोः for ऋच्याद्यन्तयोः
13. A बोध्यम् for अवगन्तव्यम्
14. A ऋचि for तृच
20. $S^{1}$ after विधानात् ins. च
20. $S^{1}$ Om. मराये . . . विधानाच्च



निषेधाच्च । **पादमध्ये च हिशब्दाभ्यासः** (पु.सू.१०.१.१०) इति हि शब्दस्य पादमध्यस्थितिमङ्गीकृत्य त्रिरभ्यासविधानाच्च । **ऋचि प्रश्लिष्टाः स्वरसंधयः पादमध्ये** (पु.सू.६.८.१) । **साम्नि विवृता ये तान् वक्ष्यामः** (पु.सू.६.७.२) इत्यत्र नोऽ३जम्रयेति नकारस्य पादादिमङ्गीकृत्य तत्परौकारेण सह **एङः पदान्तादति** (पा.६.१.१०९) इति प्रश्लिष्टजम्रयेति जकारात् पूर्वाकारस्य पादमध्यप्रश्लेषमङ्गीकृत्य **पुरो नः सर्वत्र** (पु.सू.६.८.१२) इति विश्लेषविधानाच्च । तस्मात् पुर इति पादविच्छेदः ॥

ननु पुष्पसंग्रहकारेण ***गणेशेन* अग्निं नर** इति मरायप्रकरणे **पुरो नः प्रेद्ध** इत्यत्र मराय इति **पुरो न** इत्यस्य नः शब्दस्य संधिगानविधनमिति च । **अपुरो नः** (पु.सू.१०.१.९) इति पादान्त्यनः शब्दस्य अभ्यासनिषेध इत्यप्युक्तम् । **पुरो नः सर्वत्र** (पु.सू.६.८.१२) इति सूत्रं तु नोक्तम् । तस्मात् **अपुरो न** इति पादच्छेद इति चेत् । न । **पुरो नः सर्वत्रे**ति सूत्रस्याबालवृद्ध पाठात् तस्य पादमध्ये विश्लेषविधायकत्वात् नशब्दस्य पादान्तत्वे पादमध्यविश्लेषविधानमनुपपन्नमेव स्यात् । तस्मात् ***गणेश***स्तत्सूत्रं विस्मृत्य बभ्रामेति भाति । **ऋचि प्रश्लिष्टाः स्वरसंधयः** (पु.सू.६.८.१) इत्यस्मिन् खण्डे **पुरो नः सर्वत्र** (पु.सू.६.८.१२) इति सूत्रमस्ति वा न वेति पुष्पलक्षणज्ञाः प्रष्टव्याः । तस्मात् **प्रेद्धो अग्ने दीदिहि पुरः** (सा.१३७५) इति पादः । ***गणेशो***क्तरीत्या तु पुरो न इति पादः । **मराय आन्धानन्दे अनुपादम्** (पु.सू.५.४.२७) **अः कारो वृद्धः पदगीतः पादान्त** (पु.सू.६.१.१) इत्यादि पुष्पोक्तं पादविभागस्य प्रयोजनम् ॥

यद्वा विद्यमानमपि सूत्रस्य पादान्त्यत्वमङ्गीकृत्य तेन ***गणेशेन*** प्रत्याख्यातमिति गम्यते । यद्येवं कथं पुरश्शब्दस्य संधिगानम् ? कथं वा

9. $S^{1-2}$ पादान्त्यस्य for पुरो न इत्यस्य
11. $S^{1}$ Om. अपि
11. A अपि न वक्तव्यम् for तु नोक्तम्
11. A Om. तस्मात्
12. $S^{1-2}$ पुरो for अपुरो
15. A Om. ऋचि . . . प्रयोजनम्
21. $S^{1-2}$ Om. यद्वा . . . व्यवस्था

अजम्रयेत्यकारस्य विश्लेष इति चेत् । अत्र ब्रूमः । **भक्तिमध्यः पादमध्यश्चास्तोभे प्रत्यये । संध्यगीतः सर्वत्र** (पु.सू.६.४.१३) इति संधिगानम् । **पादान्त्यात् परः स्वरो विकृष्यते** (पु.सू.६.९.२) इति विश्लेषश्च इति । तस्मात् **पुर** इति वा **पुरो न** इति वा पादविद् (पादविभागः?) । अत्र युक्तं [यत्] तदङ्गीकर्तव्यम् । अत एव [इयं] व्यवस्था । तथा हि-पुष्पसूत्रकारेण सर्वेषु मरायेषु **मराय आन्धानन्दे अनुपादम्** (पु.सू.५.४.२७) इति । अनुपादं प्रतिपादमिति । प्रतिपादं योनिवत् प्राप्तः स्वरापवादत्वेन । क्रमेण आन्धानन्दास्वरौ विधाय तदनन्तरं नन्दापवादत्वेन **नन्दायाः स्थाने मागायता परिदुहाशकुपुरः-सखातन्दुदक्षादिषु च** (पु.सू.५.४.२८) इति परिधी९ इत्यादिषु षट्सु पादेषु **दक्षाय्यो यो प्रेद्धो अग्ने पुरो नोऽजसयातां शश्वन्त** इत्येतेषु चतुर्षु पादेषु च मागायतास्वरो विहितः । ततश्च एषु दशसु पादेषु पादाद्यक्षरमारभ्य आन्धामागायते । अन्येषु पादेषु आन्धानन्दे भवत इति स्वरव्यवस्था ॥

अत्र चान्धास्वरो द्व्यक्षरः । तथा नन्दास्वरश्च । अतो नन्दास्वरादूर्ध्वं विद्यामानानां पादशेषाक्षराणां को वा स्वर इत्याकाङ्क्षायां **नन्दापरमेकोच्चम् । खुच्चमिन्द्र । नावेकं नीचम् । मासुसक्षं च** (पु.सू.५.४.२९-३२) इति एकोच्चपर्वादीनि विहितानि । मागायतास्वरो नाम द्व्यक्षरोच्चः । तत्राद्यक्षरं वृद्धम् । अन्यत् सर्वं नीच (म्) । न तु चतुरक्षरपरिमितः । अत्र मागायतास्वरविधेर्द्व्यक्षरोच्चस्वरे तात्पर्यात् । अतो मागायतास्वरः

---

8. $S^{1-2}$ Om. तद्
9. A दक्षादिषु
11. A Om. स्वरो
11. A विहिता for विहितः
12. $S^{1-2}$ Om. ततश्च
14. A तत्र for अत्र
14a. A Om. चान्धास्वरो . . . मागायतास्वर
14. $S^2$ स्वरा वृद्धं for स्वरादूर्ध्वं
19. A vide ln. no. 14a above



स्वप्रवृत्तिस्थले पादशेषाक्षरेषु प्रवर्तते । एवं सति मागायतायाम् एकोच्चपर्वादीनां च योनिवत्प्राप्तगीत्यपवादत्वेन पादान्त्याक्षरस्यापि अभ्यासनिवृत्तौ प्राप्तायां पुनरपि पुष्पे अष्टादशभावविध्यनन्त(र)म् **मरायेऽभ्यास एकाक्षरस्त्रिरुक्तः पादान्ते सर्वत्र** (पु.सू.१०.२.८) इति त्रिरभ्यासोऽपि विहितः । एवं प्रेद्ध इति पादान्त्यस्याभ्यासे प्राप्ते **अपुरो नः** (पु.सू.१०.१.७) इति तन्निषिध्य **पादमध्ये तु हिशब्दाभ्यासः** (पु.सू.१०.१.१०) इति हिशब्दाभ्यासो विहितः । तथा सत्यभ्यस्त हिशब्दात् परस्य पादशेषाक्षरस्यापि मागायतास्वरान्तर्भावेन नीचत्वे प्राप्ते दान्त्याविधाः सर्वत्रास्वासूत्तमायाम् (पु.सू.१०.७.१०) इत्यभ्यस्ता हि शब्देनैव विधायाः सदृशगीतेः समाप्तिविधानात् पादशेषाक्षरद्वयस्य पुरःशब्दस्य मागायताशेषत्वं निषिध्यते । पुनरपि हिशब्दात् परपादशेषाक्षरद्वयप्रभृति आन्धामागयताविधा आरभ्यते । ततश्च तत्राद्यपादान्तेऽपि आन्धा भवति । कृत्स्ने द्वितीयपादे तु मागायता, पुनरपि तृतीयपादे आन्धामागयतास्वरौ इति तिस्रो विधाः समाप्ताः ।

---

1. A after स्थले ins. अपि;
   A सर्वेषु प्राप्तां नन्द्राभेकामेव द्व्यक्षरे स्थापयिता नन्दापरमेवर्चदिन्द्र नावेकं नीचम्। मासुमक्षं चेति एकोच्चपर्वादीनि विहितानि । तत्र माभाषतायाः for प्रवर्तते । एवं सति मागायतायाः
2. $S^{1-2}$ अक्षराणाम् for अक्षरस्य
8. A शेषद्व्यक्षरस्य for पादशेषाक्षरस्य
10. A Om. सदृशगीतेः;
    $S^{1-2}$ Om. पादशेषाक्षर . . . निषिध्यते
11. A Om. हिशब्दात्
12. A Om. ततश्च;
    A O m. अपि;
    $S^{1-2}$ कृत्स्नेन for कृत्स्ने
13. A after मागायता adds : भवति;
13a. A पूर्वपदान्त्यस्थयान्धया सह मागायतायान्ताया विधायाः सिद्धत्वादर्थादस्मिन् पादे त्वान्धा निवृत्ता । for पुनरपि . . . समाप्ता;
    स्वरा, $S^2$ स्वरः for स्वरौ;
    vide ln. no. 13a above

एवं विविच्य स्वरव्यवस्था पुष्पभाष्यकारसंग्रहभाष्यकाराभ्यां नोक्ता इत्यलं विस्तरेण। इदं साम**सस्तोभपदविभाग्यमिति वसिष्ठस्य वैराजमन्त्यं तन्मरायम्** (प्र.सू.३.३९) इति प्रतिहारसूत्रव्याख्यानसमये तद्भाष्यकारेणोक्तम्॥

ननु **पदसदृशगीतीनि विभाग्यानि** (प्र.सू.१.१०) इति हि विभाग्यलक्षणं प्रतिहारकार आह। **सदृशगीतिषु सर्वेषु पदेषु पृथक्पदानि विभजेरन् प्रत्यन्तादनादेशे शेषमुद्गाता तानि विभाग्यानि** (द्रा.श्रौ.२०.१.३२) इति ***द्राह्यायण*** आह। तत्र उभयत्रापि पदशब्दः पादवचनः। ततश्च **प्रेद्धो अग्न** इति स्तोत्रीयायां द्वितीयपादस्य सदृशगीतित्वान्नास्ति केवलं मागायतास्वरः। पूर्वपदान्तान्धास्वरेण सह सदृशगीतित्वं यद्यप्यस्ति तथाप्येतस्मिन् पादे सदृशगीतित्वाभावात् कथं विभाग्यत्वमिति चेत्। उच्यते। पुष्पादिलक्षणवशात् गीतिभेदेऽपि सदृशगीतित्वं भवत्येव। ***पार्थवासिष्ठराजना***दीनामिव तत्र हि **पदान्ते काम्पा पदादौ च दीर्घे** (पु.सू.५.१०९) इत्यादिना गीतिभेदो विहितः। तस्मात् सस्तोभपदविभाग्यमेव। अत्र तु प्रतिहारसूत्रकारेण विभाग्यलक्षणानन्तरं **तत्र पदं पदं विभजन्त** (प्र.सू.१.११) इति विभागप्रकार उक्तः। **तत्र तेषु विभाग्येषु पादं पादं विभज्य ब्रूयुः** इति

---

1. A व्यवस्था कर्तुं पुष्पभाष्यकारोऽजातशत्रुश्च पुष्पसंग्रहकारगणेशश्च न समर्थौ भवतः। तदुक्तं पुष्पसंग्रहपर्यालोचनायाः नन्दायाः स्थाने मागायतायां कृतायां योनिवत् प्राप्तनन्दोत्तरं यत् पर्व तदपि गातव्यमिति भाति। सामलक्षणज्ञाः प्रष्टव्याः। किं च विभक्तिस्तु for व्यवस्था.... विस्तरेण

4. $S^{1-2}$ अत्र व्याख्याने तद्भाष्ये for प्रतिहार .... कारेण

8. A Om. आह;
 A Om. उभयत्रापि

9. A आद्यद्वितीयपादयोः for द्वितीयपादस्य

10. A Om. सदृशगीतित्वात् .... पादे
 $S^{1}$ स्वरत्वात् for स्वर;
 $S^{2}$ Om. अन्त;

11. A vide line no. 10;
 A before सदृश ins. पद।

13. $S^{1-2}$ Om. तत्र हि।



तद्भाष्ये उक्तम्। अत्रेदं विचार्यते। किमाद्यपादः सर्वोऽपि प्रस्तावः द्वितीयपादः उद्गीथः उत आद्यपादे ह्यभ्यस्तहि शब्देनैव सदृशगीतिलक्षणविधायाः समाप्तत्वात् सा विधा प्रस्तावः। द्वितीया विधा उद्गीथ: इति। अत्रोच्यते। द्वितीया विधा उद्गीथः। **दान्त्यविधाः सर्वत्रास्वासूत्तमायाम्** (पु.सू.१०.७.१०) इत्यत्र नैव दान्त्यविधा। **अस्वासूत्तमाया**मित्यनेनैव विधासमाप्तेः प्रतिपादनात् **पुरो नः सर्वत्र** (पु.सू.६.८.१२) इति वचनादयं विचारः ***वरदराजा***दिषु केनापि न कृतः। तेषां किं तात्पर्यमिति सामश्रौतिनः प्रष्टव्याः॥

अत्रेदं चिन्त्यम्। विराट् छन्दसि मराये एवं विभाग्यप्रतिपादनं न संभवति। त्रिपादत्वेन उपद्रवभक्तेः पादाभावेन समविभागानुपपत्तेः। न च निधनभक्तिवत् पदाभावेऽपि न विभाग्यत्वहानिरिति वाच्यम्। तर्हि ***द्राह्यायणेन*** **गायत्रीसामसु विभाग्येषूत्तमं व्यावर्गं शिष्ट्वा प्रतिहरेदिति धानंजय्यः। सर्वेणैव पदेनेति शाण्डिल्यायनः** (द्रा.श्रौ.२०.२.९-१०) इति प्रतिपादनेन निधनभक्तेः पदावश्यंभावाभावात्। न च गायत्रीसामसु विभाग्येषु गोराङ्गिरसस्य सामादिषु **त्रैधमन्तर्निधने। यथा गोराङ्गिरसस्य सामादिषु साम्नः** (प्र.सू.१.१८.१९) इति ***कात्यायन***वचनेन निधनस्यापि पदवचनं द्रष्टव्यमिति वाच्यम्। तद्वदस्य साम्नः अन्तर्निधनत्वाभावेन द्वितीयपादस्य त्रैविध्यविभागात् (ग?) संभवात्। उष्णिहां तु विभाग्ये तृतीयेऽष्टाक्षरं चतुरक्षरमुद्गातुरितिवत् विराट्छन्दसः विशेषवचनाभावेन ऋक्पदाक्षरस्य अनुपद्रवतया त्रिपदात्वेन गायत्रीसामसमानतया ***शाण्डिल्यायन***मतवत् ऋक्पदोपरि

---

2. A तु for हि;
 A Om. एव।

4. A after उद्गीथः adds : इति भाति;
 A Om. सर्वत्रा .... पुरो न।

9. A Om. अत्रेदं चिन्त्यम्।

18. $S^{1}$ तृतीयं for द्वितीयं।

19. $S^{1}$ छन्दसि for छन्दसः।

स्तोभस्योपद्रवतया स्पष्टत्वेन सर्वैरविचारितत्वाच्च । केचित्तु तृतीयपादान्त्यपर्वणः साभ्यासस्य वा अभ्यासमात्रस्य वा उपरिष्टात् स्तोभसहितस्योपद्रवत्वस्य उष्णिक्छन्दःसामवत् गायत्रीसामवत्सु *धानञ्जय्य*मतविभागवद्वा तुल्यन्यायतया स्पष्टत्वान्न विचारितमित्याहुरिति॥ १७॥

*इति तञ्जावूरग्रामनिवासिना पेत्ताशास्त्र्यपराभिधानेन हृषीकेशशर्मणा विरचितायां छन्दोविचितिवृत्तौ प्रथमे पटले चतुर्थः खण्डः॥ ४॥*

वैदिकाचारनिरतविद्वद्दीक्षितमण्डिते।
तञ्जावूरभिधग्रामे रम्ये वासं प्रकुर्वता॥ १॥

सत्कौशिककुलश्रीमत्प्रयागकुटिकेन च।
अधीतिना सामवेदे साङ्गे तद्भाष्यवेदिना॥ २॥

प्रतिपादयता फुल्लं साम्नां पर्वणि पर्वणि।
श्रौतस्मार्तप्रवीणेन नारायणसुतेन हि॥ ३॥

पेत्ताशास्त्र्यभिधानेन हृषीकेशेन धीमता।
वृत्तिश्छन्दोविचित्याद्यपटलस्याधुना कृता॥ ४॥

इति प्रथमः पटलः समाप्तः॥ १॥

✿✿✿

3. S¹ सामसु for सामवत्सु।
8. S¹⁻² Om. वैदिका . . . कृता॥ ४॥

# द्वितीयः पटलः

## प्रथमः खण्डः

तत्त्व० - चतुरुत्तराणां सप्तानां छन्दसां व्याख्यानानन्तरं छन्दसां विचयं व्याख्यास्याम (नि.सू.१.१.१) इति प्रतिज्ञातार्थशेषं व्याख्यातुमादौ अतिच्छन्दसां व्याख्यानं प्रतिजानीते -

**ऊर्ध्वं जगत्या अतिच्छन्दसः।**

इति। जगत्या अष्टाचत्वारिंशदक्षराया ऊर्ध्वमधिकमतिच्छन्दसः अधिकाक्षरयुक्तानि छन्दांसि। ऋगभिप्रायं स्त्रीत्वम्। व्याख्यास्याम इति शेषः॥ १॥

**द्वापञ्चाशदक्षरप्रभृतयः॥ १॥**

इति। स्पष्टम्॥ १॥

ताः कतिविधाः किंपर्यन्ता इत्यत आह -

**चतुरुत्तरौ द्वौ सप्तवर्गौ। चतुश्शताक्षराणां परार्ध्या॥ २॥**

चत्वारि चत्वार्यक्षराण्युत्तराण्यधिकानि ययोस्तौ। सप्तानां वर्गः सप्तवर्गस्तौ, चतुर्दश इति यावत्। चतुश्शताक्षराणां छन्दसां परार्ध्या पर्यन्तम्॥ २॥

छन्दो० - अतिपूर्वछन्दोऽतिच्छन्दाः इति भवति। तथा च देवताध्याये

12. A परार्धा for परार्ध्या

**निरुक्तिः अतिच्छन्दाश्छदेः** (दे.अ.ब्रा.३.१९) इति। द्व्यधिका पञ्चाशत् द्वापञ्चाशत्। जगत्याः परं **द्वापञ्चाशदक्षरप्रभृतयश्चतुरुत्तरौ** द्विपञ्चाशत् षट्पञ्चाशदित्येवंप्रकारेण। **चतुरुत्तरौ द्वौ सप्तवर्गौ अतिच्छन्दसो** भवन्ति। **वेदाः प्रमाण**मितिवत् सामानाधिकरण्यम्। अतिच्छन्दःशब्दः स्त्रीलिङ्गः। आसामतिच्छन्दसां मध्ये **पराध्या** उत्तमा अतिच्छन्दाः चतुःशताक्षरा भवति। चतुरक्षराधिकशताक्षरा भवति ॥१-२॥

**तासां नामधेयानि ॥ ३ ॥**

**तत्त्व॰** - इति। गतम् ॥ ३ ॥

**विधृतिः शक्कर्यष्टिरत्यष्टिर्मंऽहना**
**सरित्सम्पेति पूर्वस्य ॥** ४ ॥

**तत्त्व॰** - सप्तवर्गस्येति शेषः ॥ ४ ॥

**छन्दो॰** - **तासां** द्विपञ्चाशदक्षरप्रभृतीनां चतुःशताक्षरपर्यन्तानामतिच्छन्दसां मध्ये आद्यसप्तवर्गस्य **विधृत्यादिसम्पे**त्यन्तानि सप्त नामधेयानि यथाक्रमं भवन्ति। अत्र बह्वृचास्तु आद्यसप्तवर्गस्य अतिजगती शक्करी अतिशक्करी अष्टिरत्यष्टिः धृतिरतिविधृतिरिति नामधेयान्याहुः। तदुक्तं शौनकेन -

**द्वावतिच्छन्दसां वर्गावुत्तरौ चतुरुत्तरौ।**
**प्रथमातिजगत्यासां सा द्विपञ्चाशदक्षरा ॥ १ ॥**
**षट्पञ्चाशच्छक्करी सा स्यात् षष्टिरेवातिशक्करी।**
**उत्तराष्टिश्चतुःषष्टिस्ततोऽष्टाषष्टिरत्यष्टिः ॥ २ ॥**
**षट्सप्ततिस्त्वतिधृतिः धृतिः पूर्वा द्विसप्ततिः ॥**

(ऋ.प्रा.१६-८६)

अत्र विधृत्यादीनां **तेषां ऋग्यत्रार्थवशेन पादव्यवस्था** (जै.सू.२.१.३५) इति न्यायसूत्रात् पादयुक्तत्वेन ऋक्त्वात् पादाः सन्ति।

2. $S^{1-2}$ Om. जगत्याः परम्
9. $S^{1-2}$ P अंहः for मंऽहना
24. $S^{3}$ सूत्रत्वात् for °सूत्रात्



ते चाव्यवस्थिता इत्युक्तं परिभाषायां यद्यपि ऋग्वेदपादानुक्रमणीकारेण-

**पादा अतिजगत्यास्तु त्रयो द्वादशकाः परौ।**

**अष्टकौ** इत्यादिना पादव्यवस्था उक्ताः। तथापि एतच्छन्दोविचितिकारेण अनुक्तत्वात् प्रायिका इत्यवगन्तव्याः। ते च अस्माभिस्तत्र तत्र प्रदृश्यन्ते (दर्श्यन्ते?)। तत्र विधृत्या उदाहरणम् - **प्र वो महे मतयो यन्तु विष्णवे** (सा.४६२) इयं पञ्चपदा। **तमिन्द्रं जोहवीमि मघवानमुग्रम्** (सा.४६०)। इयं चतुष्पदा अमृतविधृतिः ॥

षट्पञ्चाशदक्षरा शक्करीच्छन्दः। अस्याः पादाः सप्त ते च अष्टाक्षराः। यथाह पादानुक्रमणीकारः - **शक्करीपादाः सप्तैवाष्टाक्षरास्तु ते** इति। **प्रोष्वस्मै पुरो रथम्** (सा.१८०१)। महानाम्नीषु गायत्र्यादीनि षट् छन्दांसि प्रति स्तोत्रीयं सन्ति। तत्रत्यशक्कर्यप्युदाहरणम्। तथा हि प्रथमस्तोत्रीयायां **विदामघवन्** (सा.६४१) इति पादद्वयमेका ऋक्। ततः **शिक्षाशचीनाम्** (सा.६४१) इत्यारभ्याष्टाक्षरपादविकारः सप्ताक्षरपादास्त्रयः शक्करीपादाः। **स्वर्णांशुः** (सा.६४२) इत्यारभ्य द्वौ पादौ क्रमेण **धातुर्वत्स** इत्येवंसंज्ञकौ। तत ऊधःसज्ञ इन्द्र द्युम्नाये (सा.६४२) इत्यष्टाक्षरः शाक्करपादः। तत **एवा हि शक्रः** (सा.६४३) इति पुरुषसंज्ञकः पादः। ततो **राये वाजाय वज्रिवरः** (सा.६४३) इत्यादयोऽष्टाक्षरास्त्रयः पादाः शाक्कराः। तत **आयाहि** (सा.६४३) इत्यध्यासो नामैकपादः इति त्रयोदशपादाः। एवं द्वितीयायां **विदाराय** (सा.६४४) इत्यादयस्त्रयोदशपादाः एवंसंज्ञकाः। तृतीयायां **त्वेवम् इन्द्रं धनस्य** (सा.६४७) इत्यादयो द्वादशपादाः। ततः **शूरो यो गोषु** (सा.६४९) इत्यध्यासद्वयम्। अतस्तृतीया चतुर्दशपादा। तत **एवाही**त्यादीनि पुरीषपदानि।

1. A °पदा for °पादा
7. $S^{2}$ Om. अमृत°
9. $S^{2}$ सप्त वा for सप्तैव
18. $S^{2}$ अध्यासानां for अध्यासो नाम and Om. एकपादः
19. $S^{2}$ साष्टिकाः for संज्ञकाः
21. A Om. तृतीया
21. A °पादाः for पादा

तदुक्तं निदानकारेण - **अथैतासु महानाम्नीषु विप्रतिपादयन्ति । इदं शाक्करमिदमशाक्करमिति । अशाक्करी प्रथमा द्विपदा । शाक्कराणि त्रीणि पराणि पदानि । धातुरशाक्करः पञ्चाक्षरः । स एष कृताकृतो भवति । वत्सोऽशाक्करोऽष्टाक्षरः । ऊधःशाक्करमष्टाक्षरम् । अभ्यासवत् तस्य द्व्यक्षरान् पादादीन् प्रतितोदा इत्याचक्षते । पुरुषोऽशाक्करः पञ्चाक्षरः । शाक्कराण्येव त्रीणि पराणि पदानि । अध्यासोऽशाक्करोऽष्टाक्षरः । तस्य प्रस्तावयति । न प्रतिहारयति । एतेनैवोत्तरयोः शाक्कराणि चाशाक्कराणि च व्याख्यातानि । द्व्यध्यासोत्तमा शाक्करी भवति** (नि.सू.३.१३) निदानवाक्यम् । तस्मात् प्रथमस्तोत्रीयायां **शिक्षाशची । पूर्वीणाम् । अभिष्ट्वमभि । इन्द्रद्युम्नाय । राये वाजाय । शविष्ठ वज्रिन् । मंहिष्ठ वज्रिन्** इति सप्तपदा शक्करी । द्वितीयायां **मंहिष्ठवज्रिन् । यःशविष्ठः । यो मंहिष्ठः । इन्द्रो विदे । तमूतये । जेतारम् । स नःस्वर्षद** इति सप्तपदा शक्करी । तृतीयायां तु **सनःस्वर्षद । सनःस्वर्षद पूर्वस्य यत्ते । पूर्त्तिंशशविष्ठ । नूनं तन्नव्यम् प्रभो जनस्य । समर्येषु** इति सप्तपदा शक्करी । अन्यानि पञ्चच्छन्दांसि व्यतिषक्तानि भवन्ति । तथाहि - आद्यायां द्विपदा(यां) तु द्विपदा गायत्री । द्वितीयायां तु द्विपदा त्रिष्टुप् । तृतीयायां तु द्विपदा विष्टारपङ्क्तिः । **स्वर्णांशु**रिति धातुसंज्ञकस्य **सुवर्ण अंशु**रिति विकर्षेण पञ्चाक्षरत्वात् दैवी पङ्क्तिः । प्रचेतन इति वत्सस्य दैव्यतिच्छन्दाः प्रजापतिगायत्री वा । **एवाहि शक्र** इति पुरुषस्य दैवीपङ्क्तिः । अध्यासस्य दैवी जगती । एवं प्रथमायां शक्करीव्यतिरिक्तानि पञ्च छन्दांसि । तथोत्तरयोरपि । उत्तमायां तु अध्यासस्य द्विपदा गायत्री । अत्र प्रमाणं **शक्कर्यः पृष्ठं भवन्त्यन्यदन्यच्छन्दः** (तां.ब्रा.२१.४.८.९) इति ब्राह्मणम् । अत्र शक्करी प्रौढच्छन्दोऽन्यानि छन्दांसि स्वल्पानि । तथा च द्राह्यायणः **उपक्षुद्रा इति चाहेति** । अत्र धन्वी महानाम्नीरधिकृत्य **ब्राह्मणमुपक्षुद्रा गायति** इति । **तस्मादुपक्षुद्राः पशवः**

---

1. $S^{1-2}$ निधन° for निदान°
15. $S^{2}$ दश for द्वि°
24. A गायन्ति, $S^{1-2}$ गायत्री for गायति



(तां.ब्रा.१३.४.५) इति । तस्यायमर्थः । यासां शक्करीणां समीपे क्षुद्राणि पञ्चच्छन्दांसि व्यतिषक्तानि द्विपदा धातुर्वत्सः पुरुषोऽध्यासेति भवन्ति ता उपक्षुद्राः शक्करीर्गायेत् । अत एव हि पशवोऽप्युपक्षुद्रा भवन्ति । तथा हि धेनुसमीपे क्षुद्रभूता वत्साः स्त्रीपुंसरूपास्तिष्ठन्तीति । किं च **शक्कर्यः पृष्ठं भवन्ति अन्यदन्यच्छन्दः** (तु.तां.ब्रा. २१.४.८.९) इति ब्राह्मणमिति महानाम्नीषु शाक्करपादानामशाक्करपादैर्व्यतिषङ्गाध्ययने प्रमाणं तु **असंश्लिष्टा गायति । तस्मादसंश्लिष्टाः पशवः** (तां.ब्रा.१३.४.६) इति ब्राह्मणम् । महानाम्नीनां शक्करीच्छन्द इति प्रसिद्धिस्तु तत्प्रधानत्वात् मल्लग्रामवत् । न्यायशास्त्रवत् चक्रिणो गायन्तीतिवच्च उपपद्यते । बह्वृचास्तु **प्रतिस्तोत्रीयं तिस्रः ऋच एकर्चावत् कार्यं भजन्त** इत्याहुः । तथा चाश्वलायलनः **शाक्करं चेत् पृष्ठं महानाम्न्यः स्तोत्रीयस्ता अध्यर्धकारं नव प्रकृत्या तिस्रो भवन्ति** (आ.श्रौ.७.१२.१०) इति । अस्माभिरपि ऋगध्ययनकाले तिस्र ऋच इवाधीयन्ते ।

षष्ठ्यक्षरा अष्टिः । **अभि त्यं देवं सवितारमोण्योः कविक्रतुम्** (सा.४६४) । इयं चतुष्पदा पञ्चदशाक्षरपादा ॥

चतुःषष्ट्यक्षरा अत्यष्टिः । **अग्निं होतारं मन्ये दास्वन्तम्** (सा.४६५) । **त्रिकन्दुकेषु महिषो यवाशिरं तुविशुष्मः** (सा.४५७) । अग्निं होतेत्येषां सप्तपदा । तथा च सप्तपदायां **त्रीनुक्त्वा द्वौ द्वौ परानग्निं होता** (सा.४६५) (नि.सू.२.३.१२) इति वक्ष्यति । अत एव प्रवर्ग्यावभृथसाम्नोः प्रतिपादं नन्दास्वरादिपर्वद्वयमधीयते । त्रिकद्रुकेष्वित्येषा चतुष्पदा षोडशाक्षरपादा । अत एव अस्यामृचि रहस्ये सस्तोभपदविभाग्यं पञ्चनिधनं वामदेव्यं षोडशाक्षरचतुष्पादमधीयते ।

---

3. $S^{1}$ after गायेत् ins. इति
9. A Om. चक्रिणो गायन्तीतिवत्
11. $S^{1-2}$ न प्रकृत्यादि for नव प्रकृत्या
12. $S^{1-2}$ Om. अस्माभिरपि . . . अधीयन्ते
22. $S^{1}$ षोडशाक्षरपादं, A षोडशाक्षरः for षोडशाक्षर

अष्टाषष्ट्यक्षरा **मंहनाच्छन्दः** । **अस्तु श्रौषट् पुरो अग्निं धिया दधे** (सा.४६१) इयं सप्तपदा । तदुक्तम् ऋग्वेदपादानुक्रमणीकारेण - **अत्यष्टिपादा जागतौ चाष्टकास्त्रयः । जागतश्चाष्टकश्चेति** । ऋग्वेदिनो मंहनाच्छन्दोऽत्यष्टिच्छन्द इति वदन्ति । तदुक्तं प्राक् ।

द्विसप्तत्यक्षरा **सरिच्छन्दः** । उदाहरणम् - **कशुक्राः . . . उदुत्यम्** (सा.३१) इति साम । इदमृग्वेदेऽवमंहः ॥

षट्सप्तत्यक्षरा सम्पाच्छन्दः । उदाहरणम् - **सुब्रह्मण्योमिन्द्रागच्छ** (मा.श.३.३.४.१८) **क भ्राजा उदुत्यं चेन्दन्नरः** इत्याद्यसप्तवर्गः ॥३-४॥

**सिन्धुः सलिलमम्भो गगनमर्णव आपः समुद्र इत्युत्तरस्य ॥ ५ ॥**

**तत्त्व०** - सप्तवर्गस्येति शेषः । अत्रोदाहरणानि-द्विपञ्चाशदक्षरं विधृतिच्छन्दः । उदाहरणम् - **प्र वो महे मतयः** (सा.४६२) । षट्पञ्चाशदक्षरं शक्करीछन्दः - **प्रोष्वस्मै पुरोरथम्** (सा.१८०१) । षष्ट्यक्षरमष्टिच्छन्दः - **साकं जातः क्रतुना** (सा.१४८७) चतुःषष्ट्यक्षरमत्यष्टिः - **अया रुचा हरिण्या** (सा.४६३) अष्टषष्ट्यक्षरमंहच्छन्दः - **अग्निं होतारम्** (सा.४६५) । इयं बह्वृचानामत्यष्टिच्छन्दः । यथा कात्यायनः - **अत्यष्टिरग्निꣳहोतारम्** (सर्वानुक्र.१.१२७) इति ।

द्विसप्तत्यक्षरं सरिच्छन्द अवमंहः । षट्सप्तत्यक्षरं सम्पाच्छन्दः । स हि शब्दः सुब्रह्मण्यानिगदश्चोदाहरणम् । सिन्धुः सलिलमित्युत्तमवर्गस्योदाहरणं मृग्यम् । केचिदित्थमुदाहरन्ति - इलान्दस्य स्तोत्रीया सिन्धुच्छन्दः उदाहरणम् । तत्र हि **अर्द्धर्चेष्वनुगानानि**

2. A पद for पाद
6. $S^1$ विमहम्, A वंमहः for वमंहः
7. A Om. उदाहरणम्
8. A इत्याद्यपि for इत्याद्य
18. $S^1$ शब्देन for शब्दः
20. $S^2$ अत्र for तत्र



(नि.सू.६.७) इति सूत्रेणैकैका स्तोत्रीयाशीत्यक्षरेषु गीयत इति । अत्र विधायकब्राह्मणे **समुद्रो वा एतच्छन्दः सलिलम्** (तां.ब्रा.५.३.३) इति समुद्रः सिन्धुपर्याय इति दृष्ट्वा चतुरशीत्यक्षरं सलिलं छन्दः । तस्योदाहरणमाह षड्गुरुशिष्यः - **भगो अनुप्रयुङ्क्ताम्** (अ.१२.१.४०) (वेदार्थदीपिका १.११.१) इत्यादि । अष्टाशीत्यक्षरमम्भः छन्द उदाहरणम् - **तच्चक्षुर्देवहितम्** (ऋ.७.६६.१६) इत्यादि । द्विनवत्यक्षरं गगनच्छन्दः । तस्य महानाम्नीषूदाहरणं प्रथमा स्तोत्रीया । षण्णवत्यक्षरमर्णवच्छन्दः । महानाम्नीष्वेव द्वितीयस्तोत्रीयोदाहरणम् । शताक्षरमापच्छन्दः - **देवो अग्निः स्विष्टकृद्देवान्यक्षद्यथायथम्** (वा.सं.२१.५८) । चतुश्शताक्षरं समुद्रच्छन्दः । उदाहरणं महानाम्नीषु तृतीया ॥ ५ ॥

**छन्दो०** - अतिच्छन्दस्सु द्वितीयसप्तवर्गस्याह-सिन्धुरिति । अशीत्यक्षरादि द्वितीयसप्तवर्गस्य सिन्ध्वादिसमुद्रान्तानि यथाक्रमं नामधेयानि भवन्ति । बह्वृचास्तु **कृतिः प्रकृतिराकृतिर्विकृतिः संकृतिरभिकृतिरुत्कृतिरिति क्रमेण** इति नामधेयान्याहुः । तदुक्तं शौनकेन -

कृतिः प्रकृतिराकृतिर्विकृतिः संकृतिस्तथा ।
षष्ठी चाभिकृतिर्नाम सप्तम्भुत्कृतिरुच्यते ॥ १ ॥
अशीतिश्चतुरशीतिरष्टाशीतिर्द्विनवतिः ।
षण्णवतिः शतं वर्णाः उत्तमा तु चतुःशतम् ॥(ऋ.प्रा.१६.८९.९०)

इति । अस्माकं तु अशीत्यक्षरं सिन्धुच्छन्दः । तस्योदाहरणानि तु शाखान्तरे द्रष्टव्यानि ॥

3. $S^1$ दृष्टं, $S^2$ अष्ट for दृष्ट्वा
5. P Om. अष्टाशीत्यक्षरम्
11. A before अति adds : अत्र
12. A Om. नामधेयानि
19. $S^{1-2}$ रहस्ये **अग्ने तव श्रवो वय** इत्यत्रेदानीमधीयमानेलान्दसाम्नि प्रथमा स्तोत्रीया । द्वितीया तृतीया च । तत्र हि द्वयोर्द्वयोः ऋचोः स्तोत्रीया समाप्यते । प्रत्यृचं चत्वारिंशदक्षराणि मिलित्वाशीत्यक्षराणि संपाद्यन्ते ($S^2$ संपद्यन्ते)। ननु ब्राह्मणे **समुद्रो वा एतच्छन्दः सलिलं लोमशमिति** फुल्लसूत्रेऽपि समुद्रच्छन्दसि चोतायां द्वितीयस्थमिति चेदिलान्दसाम छन्दः समुद्रच्छन्दः स्वेन प्रतिपाद्यते इति चेदुच्यते । ब्राह्मणादिगतसमुद्रशब्दस्य सिन्धुपरत्वान्न दोषः । तथा चोक्तम् for शाखान्तरे द्रष्टव्यानि ।

ननु ब्राह्मणभाष्यकारेण **समुद्रो वा एतच्छन्दः** (तां.ब्रा.५.३.३) इत्यस्य व्याख्यानसमये **अग्ने तव श्रवः** (सा.१८१६) इत्यादिषु द्वयोर्द्वयोः ऋचोः साम समाप्यते। प्रत्यृचं चत्वारिंशदक्षराणि मिलित्वा अशीत्यक्षरस्य च्छन्दसः सिन्धुरिति संज्ञा । समुद्रशब्दश्च सिन्धुपर्याय इत्युक्तम् । तस्मादिदमेवोदाहरणमिति चेत् । अत्रोच्यते । नेदमुदाहरणम् । ऋग्द्वयस्य एकच्छन्दोऽसंभवात् । **यच्छन्दस्कायामृचि गीयते तदस्य छन्दः** (नि.सू.१.१३) इति निदानवचनात् । महानाम्नीषु प्रतिस्तोत्रीयम् अनेकऋक्त्वात् । अनेकच्छन्दोदर्शनाच्च । **श्यावाश्वादिषु पुरोजिती वो अन्धस** (सा.५४५) इति **पद्याचाक्षर्य्या च विराजौ भवतः** (तां.ब्रा.८.५.७) इति ब्राह्मणोक्तविराट्छन्दोवादो यथा गौणः तद्वत् सिन्धुव्यवहारोऽपि गौण एव । अत एव कल्पभाष्यकारेण इलान्दसाम्नो विष्टारपङ्क्तिच्छन्द इत्युक्तम् । **समुद्रच्छन्दसि चोतायां द्वितीयस्थम्** (पु.सू.९.४.१२) इति फुल्लसूत्रमपि ब्राह्मणानुवादकम् । न तु छन्दःपरम् । किं च । **अग्नेरिलान्दं पञ्चानुगानम्** (आ.ब्रा.२.१९.१) इत्यार्षेयब्राह्मणम् । तत्र प्रथमं स्तौभिकमनुगानम् प्रकृतितः सिद्धम् । द्वितीयाद्यनुगानानि चत्वारि अर्चिकानि । तानि च ऊहगाने **योनिवत्स्वराः स्तोभाभ्यासविराभाश्च** (पु.सू.८.५.१) इति रहस्येऽप्यूहनीयानि भवन्ति। तत्र चत्वारः पक्षाः। तद्यथा **अग्ने तव श्रव** इति षडृचे तिसृषु ऋक्षु प्रथमां चत्वारिंशदक्षरामृचं चतुर्धा विभज्य प्रथमे दशाक्षरे प्रथममार्चिकमनुगानं द्वितीये दशाक्षरे द्वितीयमनुगानं, तृतीये दशाक्षरे तृतीयमनुगानं चतुर्थे दशाक्षरे चतुर्थमनुगानम् । एवमनुगानचतुष्टयमेकस्यामृचि समापनीयम् । सैका स्तोत्रीया । इत्येकः पक्षः। तथा च द्राह्यायणः - **अग्ने तव श्रवः इत्येतासां पूर्वासु तिसृषु दशाक्षरेष्वार्चिकानि अनुगानानि । एवं तृचे भवति** (द्रा.श्रौ.२९.४.७)

1. S[1-2] तत्र for ननु; S[1-2] Om. समुद्रो . . . व्याख्यानसमये
4. S[1-2] Om. इत्युक्तम् । . . . छन्दः परम् । किं च
9. A Om. चाक्षर्य्या
14. S[1-2] vide footnote : 4



इति । यद्वा षट्सु ऋक्षु प्रतिस्तोत्रीयं द्वे ऋचौ । तयोरर्धर्चेषु अनुगानचतुष्टयम् । तथैवेदानीं सामगा वयं रहस्येऽधीमहे इत्यपरः पक्षः । तथा च द्राह्यायणः - **षडृच इत्याचार्याः । अर्धर्चेष्वनुगानम्** (द्रा.श्रौ.२९.४.१२) इति अथवा **आते अग्ने इन्धीमहि** (सा.१०२२.४) **अग्निं तं मन्ये यो वसुः** (सा.१७३७-४१) इति तृचद्वयं षडृचः । **अग्ने तव श्रवः** (सा.१८१६.२१) इति षडृचश्च । एवं द्वादशर्चाः । तत्र योनिवच्चतसृषु ऋक्षु चत्वार्यार्चिकानि अनुगानानि । सैषा एका स्तोत्रीया । एवं द्वितीया तृतीया चेत्यन्यः पक्षः । तथा च द्राह्यायणः - **द्वादशर्च इति शाण्डिल्यः । तत्र यावाग्नेयौ तृचौ आहरेत् आते अग्ने - अग्निं तं मन्ये** (द्रा.श्रौ.२९.४.१३) इति । यद्वा चतुर्थमेवानुगानं तृचे कार्यमितराण्येकर्चान्येवेति चतुर्थः पक्षः । तथा च द्राह्यायणः - **चतुर्थमेवानुगानं तृच इति वार्षगण्य** (द्रा.श्रौ.२८.४.१५) इति । एवं चत्वारः पक्षाः । तेषु वार्षगण्यपक्षे प्रतिस्तोत्रीयमभ्यासेन सह द्वादशोत्तरत्रिशतान्यक्षराणि तानि त्रीणि समुद्रच्छन्दांसि प्रत्येकं चतुश्शताक्षराणि भवन्ति । तत्रत्यप्रथमा स्तोत्रीया द्वितीया तृतीया च समुद्रच्छन्दस उदाहरणानि। एतत्परं ब्राह्मणं जातावेकवचनम् इति द्रष्टव्यम्।

चतुरशीत्यक्षरं सलिलं छन्दः । एतच्छन्दःप्रभृति समुद्रान्तानां छन्दसामष्टपदाप्रभृतीनां न प्रज्ञातमवसानं विद्यते इति वचनादष्टपदादय ऋचः उदाहरणानि संभवन्ति। अस्मदधीतशाखायां ता ऋचो न दृश्यन्ते। शाखान्तरे द्रष्टव्याः। यद्वा तास्तत्र षड्गुरुशिष्येणोदाहृताः। तथाहि - सलिलच्छन्दः - **भगो अनुप्रयुङ्क्ताम् । इन्द्रो यातु पुरो गवः । यस्याः सदोहविर्धाने यूपो यस्यानुमीयते। ब्राह्मणा यस्यामर्चन्ति ऋग्भिः साम्ना यजुर्विदः। युध्यन्ते यस्यामृत्विजः सोममिन्द्राय पातवे। सानो भूमिर्दक्षिणाया**

8. A द्वादशर्चाः for द्वादशर्चः
9. S[1-2] यथा वा for यद्वा
15. S[1-2] चेत् । सत्यम् । एवमपि फुल्लसूत्रस्यसमुद्रशब्दस्य सिन्धुपरत्वमेवेति वक्तव्यम् । समुद्रच्छन्दसि चोतायां द्वितीयस्थमिति सूत्रेणं पाकवाचीकावर्चाः इत्यादातास्वराद्यवृद्धिश्च । अरेतिरशब्दे कृतवृद्धिनिषेधस्य च । आकइ । रची (आकबुचि) ज्यन्नग्ने । इत्यधीयमानेलान्दासामनि दर्शनात् । for द्रष्टव्यम्

सुशेवा यज्ञे ददातु सुमनस्यमानेतिपञ्चावसाना ॥ (वेदार्थदीपिका १.११.६)

अष्टाशीत्यक्षरमम्भश्च्छन्दः । तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदःशतम् इत्यादि ज्योक्च सूर्यं दृशे (तै.आ.४.४२.५) इत्यन्तम् ॥

द्विनवत्यक्षरं गगनच्छन्दः। इमे सोमास्सुराळाश्छागैर्नमेषैर्ऋषभैः सुताः। शष्पैर्नतोक्मभिर्लाजैर्महस्वन्तः। मदामासरेण परिष्कृताः। शुक्राः पयस्वन्तो मृताः। प्रस्थिता वो मधुश्च्युताः। तानश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा। जुषन्तां सोम्यं मधु। पिबन्तु मदन्तु वियन्तु सोम्यम्॥ (मा.सं.२१.४२)

षण्णवत्यक्षरमर्णवच्छन्दः। महानाम्नी प्रथमस्तोत्रीया द्वितीया च। वेदान्तरे तु देवो अग्निः स्विष्टकृत्। सुद्रविणा मन्द्रः कविः। सत्यमन्वा यजामहे। होता होतुर्होतरायजीयान्। अग्ने यान्देवानयात् यामभिद्रेऽर्येते। होत्रेअमत्सत। तां स सधनुषीं होत्रां देवं गतीमां दिवि देवेषु यज्ञमैरयेमम्। स्विष्टकृच्चाग्ने होता भूः। वसुवने वसुधे यस्य नमोवाके वीहि॥ (तै.ब्रा.३.५.९.१) (ऊ.श्रौ.१.८.७)

शताक्षरमापश्च्छन्दः । देवो अग्निः स्विष्टकृत् । देवान्यक्षद्यभायथम्। होताराविन्द्रमश्विना वाचावाचं सरस्वतीम्। अग्निं सोमं स्विष्टकृत्स्विष्ट इन्द्रः सुत्रामा सविता वरुणो भिषक्। इष्टो देवो वनस्पतिरिष्टा देवा आज्यपाः। इष्टो अग्निरग्निना। होता होत्रे स्विष्टकृत्। यशो न दधदिन्द्रियम्। अर्जमवचितिं स्वधाम्॥

चतुःशताक्षरं समुद्रच्छन्दः। विदामघवन् तृतीया स्तोत्रीया। वेदान्तरे तु छागस्य हविष आतामद्य। मध्यतो मेध उद्भृतम्। पुराद्वेषोभ्यः। पुरा पौरुषेय्यं ग्रहः। धस्ता नूनं घासे। अच्छ्राणां यवसः। प्रथमानां

11. A Om. महानाम्नी . . . द्वितीया च
12. A उदाहरणम् for तु
22. A Om. विदा . . . स्तोत्रीया



समत्सराणाम्। शतरुद्रीयाणामग्निष्वात्तानाम्। पीवोपासनानाम्। पार्श्वतः श्रेणितः शितामतः उत्सादतः। अङ्गादङ्गादवत्तानाम्। अकरतबेन्द्राग्नी जुषतां हविः॥ ५॥

तान्येतानि सर्वाणि कृतच्छन्दांसि भवन्ति॥ ६॥

तत्त्वसुबोधिनी - कृतस्य छन्दांसि कृतच्छन्दांसि। कृतो नाम यो द्यूतसमये प्रसिद्धश्चतुरङ्गः तद्वाचकेन तच्छन्दसा चतुष्कलं लक्ष्यते। तस्य च्छन्दांसि तत्प्रभृतीनि इति यावत्। तदुक्तं शौनकेन - चतुरक्षराच्चतुरुत्तरमुद्यन्ति (ऋ.प्रा.१७.१९) इति। आचतुरक्षराच्चतुरक्षरं कृतिच्छन्द आरभ्य चतुरक्षरं चतुर उद्यति उद्गच्छन्ति इत्यर्थः। तत्र कृत्यादीनामेव संज्ञान्तरमभिहितम्। न तु संज्ञिभेद इति बोध्यम्॥ ६॥

छन्दो० - एतानि विधृत्यादीनि समुद्रान्तानि छन्दांसि सर्वाणि कृतयुगस्थानानि भवन्तीत्यर्थः॥ ६॥

तत्त्व० - ननु चतुर्विंशतिप्रभृतीन्येकविंशतिच्छन्दांसि अभिहितानि। तत् कथं चतुष्कलप्रभृतित्वमित्यत आह -

अथ प्राञ्चि गायत्र्याः पञ्च कृतच्छन्दांसि॥ ७॥

कृतिश्चतुरक्षरा। प्रकृतिरष्टाक्षरा। संकृतिर्द्वादशाक्षरा। अभिकृतिः षोडशाक्षरा। उत्कृतिर्विंशत्यक्षरा॥ ८॥

इति। स्पष्टोऽर्थः। ततश्च कृतनामकस्य छन्दसोऽक्षरचतुष्करूपत्वात् तत्प्रभृतित्वं प्रकृत्यादेरिव गायत्र्यादीनामप्युपपन्नमिति भावः। उदाहरणानि- एवा ह्येव (सा.माहानाम्नी)। इन्द्रो विश्वस्य राजति (सा.४२६)। इत्यादीनि यथादर्शनं योज्यानि॥ ७॥

छन्दो० - गायत्रीच्छन्दसः पूर्वाणि पञ्च छन्दांसि अपि कृतयुगस्थानानि भवन्तीत्यर्थः॥ ६॥

तान्येवाह - कृतिरिति। स्पष्टोऽर्थः। कृतिः - एवा ह्येव (सा.६५०)। बाह्वच्ये नूनमथ (ऋ.८.४६.१५)। प्रकृतिः - इन्द्रो विश्वस्य राजति

6. S[1] छन्देन for छन्दसा; S[1] चतुष्कं for चतुष्कलं

(सा.४५६) संकृत्यभिकृत्योर्विचार्यं द्रष्टव्ये। उत्कृतिः - **विश्वतो दावन्** (सा.४६७)। बाह्वृच्ये तु **पुरुतमं पुरूणां स्तोतॄणां विवाचि। वाजेभिर्वाजयताम्** (ऋ.६.४५.२९)। एतानि पञ्च छन्दांसि उक्तमत्युक्तं मध्यमं प्रतिष्ठा सुप्रतिष्ठा इति क्रमेण बह्वृचा वदन्ति। तदुक्तं शौनकेन - **उक्तं साति मध्यमं प्रतिष्ठा सुप्रतिष्ठेति**। तैत्तिरीयास्तु - **मा प्रमा प्रतिमा उपमा समा** (ऋ.प्रा.१७.१९) इत्याहुः। तदुक्तं सर्वानुक्रमण्याम् - **अर्वाञ्चि गायत्र्याः पञ्च छन्दांसि। मा प्रमा प्रतिमा उपमा समा इति** ॥ ७॥

**एतासामन्तरेष्वन्तस्थाश्छन्दांसि** ॥ ९॥

**तत्त्व०** - **एतासां** गायत्रीणाम् **अन्तरेषु** मध्यदेशेषु द्वाविंशत्यक्षरादिषु **अन्तस्थाः**। अन्तः तिष्ठन्तीत्यन्तस्थाः राड्विराडित्यादयः। अत्रान्तरेष्वन्त इति - **वसुपते वसूनाम्** (सा.३१७)। **गोपतिं शूर गोनाम्** (सा.३५१)। इत्यत्रेवापौनरुक्त्यमिति परिहरणीयम्। छन्दांसीति नपुंसकनिर्देशो नित्यनपुंसकत्वात्॥ ८॥

**छन्दो०** - **एतासां** गायत्र्यादिसमुद्रान्तानां मध्ये **अन्तस्थच्छन्दांसि** अन्तर्गतानि छन्दांसि विराडादिविशेषेण विशिष्टच्छन्दांसीति यावत्। कानिचिच्छन्दांसि भवन्तीत्यर्थः॥ ९॥

**तत्त्व०** - एतदेव विविच्य दर्शयति -

**द्वाविंशत्यक्षरप्रभृतयश्चतुरुत्तरास्त्रयः सप्तवर्गाः। द्विशताक्षरासांपरार्ध्या**॥ १०॥

इति स्पष्टम्॥ ९॥

**छन्दो०** - तान्येवाह - **द्वाविंशतीति**। द्व्यधिका विंशतिः **द्वाविंशतिः** अक्षराणि यस्य स तथोक्तः। तत्प्रभृतयो द्वाविंशतिः षड्विंशतिरित्येवं प्रकारेण चतुरक्षरोत्तरास्त्रयः सप्तवर्गा भवन्ति। **आसां** गायत्र्याद्यतिच्छन्दसां **परार्ध्या**

5. $S^{1-2}$ Om. तैत्तिरायास्तु
15. $S^{1-2}$ Om. अन्तर्गत for अन्तर्गतानि; A विशेषणानीति for इति यावत्
22. A तत्प्रभृति तयोः for तत्प्रभृतयो



उत्तमा अतिच्छन्दाः द्विशताक्षरा भवन्तीत्यर्थः॥ ९॥

**तासां नामधेयानि। राट् सम्राट् विराट् स्वराट् स्ववशिनी परमेष्ठान्तस्थेति पूर्वस्य** ॥ ११॥

**तत्त्व०** - (नोपलभ्यते)

**छन्दो०** - **पथ्यमिति** गायत्र्यादिजगत्यन्तानां प्रथमानां सप्तानां छन्दसां संज्ञा पूर्वमेवोक्ता। द्वाविंशत्यक्षरप्रभृतिषट्चत्वारिंशदक्षर-पर्यन्तस्याद्यसप्तवर्गस्य राडाद्यन्तस्थान्तानि सप्तनामधेयानि यथाक्रमं भवन्ति। तथा हि - द्वाविंशत्यक्षरा **राट्** गायत्री। षड्विंशत्यक्षरा **सम्राट्** उष्णिक्। त्रिंशदक्षरा **विराडुष्णिक्। विराडनुष्टुप्** वा। चतुस्त्रिंशदक्षरा **स्वराडनुष्टुप्। स्वराड्** बृहती वा। अष्टात्रिंशदक्षरा **स्ववशिनी** बृहती। **स्ववशिनी** पङ्क्तिर्वा। द्विचत्वारिंशदक्षरा **परमेष्ठा** पङ्क्तिः। **परमेष्ठी** त्रिष्टुप् वा। षट्चत्वारिंशदक्षरा**न्तस्था** त्रिष्टुप्। **अन्तस्था** जगती वा। इत्येवं नामधेयानि भवन्ति। राट् गायत्री। **अग्निं वो वृधन्तम्** (सा.२१)। सम्राडुष्णिक्। **त्वमिन्द्राभिभूरसि** (सा.१०२६)। विराडनुष्टुप्। **सपूर्व्यो महोनाम्** (सा.३५५)। **स्वराडनुष्टुप्। इन्द्र जुषस्व प्रवहा** (सा.९५२) **इन्द्र स्तुराषाण्मित्रो न** (सा.९५४)।

ननु **इन्द्रजुषस्वेत्यासामृचामथवा एकपदास्त्र्यक्षराः विष्णोश्छन्दो भुरिजश्शक्वर्यः** (ता.१२.१३.२२) इति द्वादशाहब्राह्मणे शक्वरीत्वेन श्रवणात् कथं स्वराडनुष्टुप् भवति। इति चेत्। उच्यते। एतत्तृचे

3. $S^{1}$ परमेष्ठी for परमेष्ठा; A पर्यस्य $S^{1-2}$ पथ्यस्य for पूर्वस्य
11. $S^{1}$ परमेष्ठी for परमेष्ठा
17. A Om. ननु; A after अथवा ins. एताः
19. A अनुष्टुप्त्वं for अनुष्टुप्;
A Om. भवति;
$S^{1-2}$ Om. इति चेत्। उच्यते

प्रत्यृचं पादत्रयेऽन्ते प्रतिपादमन्ते त्रीण्यक्षराणि मिलित्वा नवाक्षराण्येका दैवी भुरिक् शक्करी अष्टाक्षरा अतिच्छन्दा इति वचनात् तादृशां शक्कर्यवयवत्वात् समुदाये शक्करीप्रवादो गौण एव। लक्षणविरहात्। तथैवेन्द्र जुषस्वेति वाधिकारश्शक्करीप्रवादाभ्याम् (द्रा.श्रौ.२८.२.५) इति सूत्रे धन्वी ब्राह्मणस्यायमर्थः। इन्द्रजुषस्वेति स्तोत्रीये प्रत्यृचमादितोऽष्टाक्षराः त्रयः पादाः। तत्र प्रतिपादमन्ते त्रीण्यक्षराणि। एकपदास्तिस्त्रः शक्कर्यो भुरिगिति संज्ञिताः ऋगन्तर्भूताः उपसृज्य अस्माभिरधीताः। ताभिर्विना पञ्चाक्षरास्त्रयः पादाः ऋचः। उत्तमः पादो दशाक्षरश्च। तेन पञ्चविंशत्यक्षरा ऋगाथर्वणिकैः पृथगेवाधीता। सा तिसृभिः पूर्वोक्ताभिः शक्करीभिः सह चतुस्त्रिंशदक्षरा संपद्यते। एवमेव निदानकारेणोक्तम्। यथा तदेवं शक्करीणामुपसर्गात् इन्द्रजुषस्वेति शक्कर्यउच्यन्ते इति तासु शक्करी प्रवादो गौण एव। तस्मादृगन्तर्भूतशक्करीपादैः सह आसां पादानां व्यवधानपाठादेव विहृतत्वमङ्गीकृत्य विहृतस्येन्द्रजुषस्वेत्याद्याश्वलायनसूत्रे नारायणवृत्तिकृता स्तोत्रीयानुरूपौ नास्माभिर्विहर्तव्यौ (आ.श्रौ.६.३.२)। किंतु विहृतावेव पठितवानाचार्य इति गम्यते। एतदुक्तमैतरेयब्राह्मणे - तद्यदि नानदं कुर्युरविहृतः षोडशीशंस्तव्य विहृतासु हि तासु स्तुवने। यदि गौरीवितं विहृतः षोडशी शंस्तव्यो विहृतासु हितासु स्तुवते (ऐ.ब्रा.४.२) इत्युक्तम्। ननु एवमपि शक्करीबहिर्भूतानामृचां मध्ये आद्यन्तयोर्ऋचोः भुरिक् प्राजापत्यपङ्क्तिच्छन्दः मध्यमायास्तु निचृत् प्राजपत्यपङ्क्तिच्छन्दो

1. A after त्रये Om. अन्ते
2. $S^{1-2}$ त्रिष्टुपृछन्दा for अतिच्छन्दा; A तादृश for तादृशां
3. A after समुदाये ins. अवयवः
12. A after एव ins. इति
13. $S^2$ पदानां for पादानां
16. A हृत, $S^2$ हृता for हृतः
17. $S^1$A शंस्तव्यो, $S^2$ शंसितव्यो for शंस्तव्य
20. A Om. च्छन्दः



भवितुमर्हति। प्रजापतेश्छन्दांसि अष्टाक्षरप्रभृतीनि चतुरक्षराण्यारोहीणीति (नि.सू.२.२.८) वचनात्। बह्वृचास्तु शौनकमतेनोक्तमपादमपि पञ्चाक्षरद्वयं कृत्वा पदपङ्क्तिर्गायत्रीत्याहुः। अतः भूरिक् प्राजापत्यपङ्क्तिशक्कर्यौ पदपङ्क्तिर्गायत्रीशक्कर्यौ वा स्याताम्। न तु स्वराडनुष्टुप्। इति चेत्। सत्यम्। मिलित्वा चतुस्त्रिंशदक्षरत्वात् स्वराडनुष्टुप् भवति। यथा अग्ने तव श्रव (सा.१८१६) इति षडृचे ऋग्द्वयस्यैकं सिन्धुच्छन्दः इति॥

ननु इन्द्र जुषस्व (सा.९५२) इत्याद्यन्तयोरुपरिष्टात् बृहतीच्छन्दो वा किं न स्यादिति चेत्। न। विराडपाये चापैत्यन्यासु वा (द्रा.श्रौ.२७.६.१६) इत्यत्र सूत्रे धन्विना यदि संप्रयुक्ता विराजश्चाभविष्यन् नान्यत्र वैराजात् (३.७) इत्युपग्रन्थसूत्रमुक्त्वा अस्यार्थः परोक्षपृष्ठचषडहे वैराजाभावेऽपि स्वराजो दृश्यन्ते। यथा षोडशिनः काम्यकल्पेऽनुष्टुप्सु षोडशिना स्तुवीतेत्युक्तम्। इन्द्रजुषस्वेत्यधिकृत्य बह्वृचब्राह्मणेऽपि द्वे वा अक्षरे अतिरिच्येते। षोडशिनोऽनुष्टुभमभि संपन्नस्य (ऐ.ब्रा.४.२) इति अनुष्टुप्त्वश्रवणाच्च। अत एवातिरात्रक्लृप्तौ कल्पभाष्यकारेण इन्द्रजुषस्वेत्यस्य स्वराडनुष्टुपूछन्दः। चतुर्विंशदक्षरत्वात्। यथाह भगवान् पिङ्गलनागो द्वाभ्यां विराट्स्वराजौ (पि.छ.सू.३.६०) इति। ऊनाधिकानामित्यधिकृतम्। निदानकारश्चाह - द्वाविंशत्यक्षरप्रभृतयश्चतुरुत्तरास्त्रयः सप्तवर्गाः द्विशताक्षरा सांपराध्यां। तासां नामधेयानि राट् सम्राट् विराट् स्वराट् स्ववशिनी परमेष्ठान्तस्थेति

1. $S^{1-2}$ Om. भवितुमर्हति
4. $S^{1-2}$ Om. भुरिक्;
4. A शक्कर्यः for शक्कर्यौ
4. A शक्कर्यः वा स्युः for शक्कर्यौ वा स्याताम्
9. A उच्यते for न
12. $S^{1-2}$ Om. अपि
15. A रात्रे for रात्रक्लृप्तौ
16. A Om. स्वराड्

**पथ्यस्य** (नि.सू. २.१.९.१०) इत्युक्तम्।

स्वराट् बृहती। **यद् द्याव इन्द्र ते शतम्** (सा.२७८)। स्ववशिनी पङ्क्तिः। **स्वादोरित्था विषूवतः** (सा.४०९)। परमेष्ठा त्रिष्टुप्। **त्यमू षु वाजिनं देवजूतम्** (सा.३३२)। अन्तस्था जगती। **अचोदसो नो धन्विन्निन्दवः** (सा.५५५)। अत्र ऊनाधिकानामित्यधिकृत्य। **द्वाभ्यां विराट्स्वराजौ** (पि.छ.सू.३.६०) इति पिङ्गलनागवररुचिवचनात्। तयोर्मते द्व्यक्षरन्यूनगायत्र्यादिसर्वच्छन्दसां विराड्गायत्र्यादित्वमेव। द्व्यक्षर-न्यूनाधिकानां सर्वच्छन्दसां स्वराङ्गायत्र्यादित्वमेव। न तु सम्राट्त्वादित्वमेव द्व्यक्षराधिकानाम्॥ १०॥

**प्रत्नं चामृतं च वृषा च जीवं च तृप्तं च रसं च शुक्रमित्युत्तरस्य॥ १२॥**

तत्त्व० - (नोपलभ्यते)

छन्दो० - विधृत्यादि सम्पान्तद्व्यक्षरन्यूनानां वृत्तादीनि सप्तनामधेयानि भवन्ति। तथा वृत्तविधृतिः - **विश्वाः पृतनाः** (सा.३७०) तृतीयपादस्य विकर्षेण द्वादशाक्षरत्वम्। ब्राह्मणे अतिजगतीपादस्तु विधृतेर्जगत्याः परत्वात्। एतत्तु भुरिक्जगतीप्रकरणे वक्ष्यामः। अमृतविधृतिः - **तमिन्द्रं जोहवीमि मघवानमुग्रम्** (सा.४६०)। अन्यान्युदाहरणानि तत्र तत्र द्रष्टव्यानि॥ ११॥

**अर्णश्चांशश्चाम्भश्चाम्बु च वार्याप उदकमित्युत्तमस्य॥ १३॥**

तत्त्व० - स्पष्टम्॥ १३॥

छन्दो० - सिन्ध्वादिसमुद्रान्तानां द्व्यक्षरन्यूनानामेतान्यर्णवादीनि सप्तनामधेयानि द्रष्टव्यानि। द्वाविंशत्यक्षरप्रभृतिद्विशताक्षरपर्यन्तानां

---

1. A पर्यस्य for पथ्यस्य
7. A गायत्र्यादीनां सर्वेषां for गायत्र्यादिसर्वच्छन्दसां
7. S[1-2] द्व्यक्षर for द्व्यक्षरन्यूना
8. A Om. सर्वच्छन्दसां;
 A Om. त्वमेव द्व्यक्षराधिकानाम्
10. A वृत्तम् for प्रत्नम्
14. A Om. तथा. . . वक्ष्यामः



शौनकेनापि किञ्चित् विक्रमेण राडादिसंज्ञा विहिताः। तद्यथा **ताः राट् विराट् स्वराट् सम्राट् स्ववशिनी परमेष्ठा प्रतिष्ठा वृत्तममृतं वृषा शुक्रं जीवं पयः। तृप्तमर्णोंऽशोऽम्भोऽम्बुवार्याप उदकमित्युत्तमम्** (ऋ.प्रा.१७.५) इति॥ १३॥

**तान्येतानि सर्वाणि द्वापरच्छन्दांसि भवन्ति॥ १४॥**

तत्त्व० - द्वापरो नाम द्यूतसमये प्रसिद्धो द्व्यङ्कः। यदाहुर्भाष्यकाराः - **कृतो नामायो द्यूतसमये प्रसिद्धश्चतुरङ्कः . . . इतरे त्रिद्व्येकाङ्का अधरेयास्त्रेता चापरकलिनामानः** (छा.उ.४.१.४. शांकरभाष्यम्) इति। तेन द्वापरशब्देन द्विकं लक्ष्यते। तस्य छन्दांसि तत्प्रभृतीनि इति यावत्॥ १३॥

छन्दो० - **एतानि** राडाद्युदकान्तानि छन्दांसि **द्वापर**युगस्थानानि भवन्तीत्यर्थः॥ १४॥

तत्त्व० - ननु द्वाविंशतिरेतानि छन्दांसि। तत् कथं द्विकप्रभृतित्वमित्यत आह-

**अथ प्राञ्चि द्वाविंशत्यक्षरतायाः पञ्चान्तस्थाश्छन्दांसि द्व्यक्षरप्रभृतीनि चतुरुत्तराण्यारोहीणि। हर्षिका शर्षिका सर्षिका सर्वमात्रा विराट्कामेति॥ २५॥**

तत्त्व० - गतम्। ततश्च द्वापरच्छन्दोरूपद्विकप्रभृतित्वमुपपद्यते इति भावः। द्वापरच्छन्दसामुदाहरणं यथादर्शनं योज्यम्॥ १५॥

*इति (श्रीतातप्रसादविरचितायां तत्त्वसुबोधिन्यां) निदानवृत्तौ द्वितीये पटले प्रथमः खण्डः॥ १॥*

छन्दो० - **अथ. . . . आरोहीणीति**। निगदेन व्याख्यातम्। तान्येवाह - **हार्षिकेति**। अक्षरप्रभृति द्वाविंशत्यक्षरान्तानां हर्षिकादीनि पञ्च नामधेयानि

---

21. A प्रभृतीनि for प्रभृति; A पर्यन्तानां for (अ)न्तानां

यथाक्रमं भवन्ति। तत्र द्व्यक्षरा **हर्षिका**। एवमन्या अपि द्रष्टव्याः। बह्वृचास्तु द्व्यक्षरप्रभृतीनां चतुरुत्तराणाम् एतासां मा प्रमा प्रतिमा उपमा समेति पञ्च छन्दांसि आहुः। तथा च शौनकः - **मा प्रमा प्रतिमोपमा समा** इति चतुरुत्तरादीनि (ऋ.प्रा.१७.१९) इति॥१४॥

*इति तञ्जावूरग्रामनिवासिना पेत्ताशास्त्रचपराभिधानेन हृषीकेशशर्मणा विरचितायां छन्दोविचितिवृत्तौ द्वितीये पटले प्रथमः खण्डः॥ १॥*

✿ ✿ ✿

1. A Om. बह्वृचास्तु

## द्वितीयः खण्डः

**अथ निचृद्भुरिजः॥ १॥**

तत्त्व० - व्याख्यास्याम इति शेषः॥ १॥

छन्दो० - अथ शब्दोऽधिकारार्थः। निपूर्वात् **चृति हिंसायामिति** धातोः **क्विप् च** (पा.३.२.७६) इति क्विप्प्रत्यये कृते निचृदिति भवति। **भृञ् भरणे** इति धातोः **उणादयो बहुलम्** (पा.३.३.३) इति बाहुलग्रहणात् इजिप्रत्यये भुरिगिति भवति। तदुक्तं देवताध्यायब्राह्मणे - **निचृत् पूर्वस्य भृतेः भरणात् भुरिगुच्यते** (दे.ब्रा.३.२१) इति निचृद्भुरिजः प्रस्तूयन्त इत्यर्थः॥ १॥

**या एकेनाक्षरेणोनास्ता निचृतः।**
**अथ या एकेन ज्यायस्यस्ता भुरिजः॥ २॥**

तत्त्व० - गायत्र्यादिषु **या** ऋच **एकेनाक्षरेणोनास्ता निचृतः**। उदाहरणम् - **तत्सवितुर्वरेण्यम्** (सा.१४६२) इति सा (निचृद्) गायत्री। अथ या ऋचः एकेनाक्षरेण ज्यायस्यः अधिकाः ता भुरिजः। **सदा व इन्द्रश्चर्कृषदा**

5. S[1-2] Om. कृते।
7. S[2] किञ्चित्, S[1]AP किञ्चित् for (इति) vide उणादि भृञ उच्च (२४०)
11. A Om. अथ।
13. P सुगायत्री for सा गायत्री।

(सा.१९६) इति भुरिगायत्री ॥ २ ॥

**छन्दो०** - **ता एवाह - या** इति। पूर्वोक्तानां गायत्र्यादिसमुद्रातिच्छन्दोऽन्तानां मध्ये **या** गायत्र्यादयोऽतिच्छन्दस **एकेनाक्षरेण ऊना हीनास्ता निचृद्रायत्र्यादयो भवन्ति**। या एकेनाक्षरेण ज्यायस्यः अधिकास्ताः भूरिगायत्र्यादयो भवन्तीत्यर्थः। चतुर्विंशत्यक्षरेत्यादिषु गायत्र्यादि-जगत्यन्तच्छन्दोविधिषु तत्तत्संख्यापदानां तत्तत्पूर्णच्छन्दोविधि-परत्वात् तदपेक्षन्यूनाधिकत्वं द्रष्टव्यम्। तेष्वक्षराणां व्यवस्थितत्वादन्येष्व-व्यवस्थितत्वात् च विधृत्यादिषु विधिषु तु संख्यापदानामेव श्रुतत्वात् तदपेक्षन्यूनाधिकत्वं स्पष्टमेव। अत्र **एतावता वाव माध्यंदिनं सवनं पुपुवे** (ता.ब्रा.७.३.१) इत्यादि माध्यंदिनविधायकब्राह्मणे **उच्चा ते** (सा.४६७) इति त्रयोविंशत्यक्षरायां गायत्र्यामामहीयवमधिकृत्य **आत्मा वै यज्ञस्य पवमानो मुखं गायत्री प्राणो गायत्रं यद् गायत्र्यां गायत्रेण स्तुवन्ति** (तां.ब्रा.७.३.७)। **प्राणो गायत्री अयं वै गायत्री इयं वै गायत्री वीर्यं वै गायत्री प्राणो गायत्रं यद् गायत्र्यां गायत्रेण स्तुवन्ति** इति। द्वादशाहब्राह्मणेऽपि **उच्चा ते जातमन्धसः** (सा.४६७) **इति गायत्री भवति** (तां.ब्रा.१२.३.१) इति। **षड्विंशब्राह्मणेऽपि द्वे गायत्र्यां सामनी** (ष.ब्रा.१.३.३) इति च केवलगायत्रीत्वेन श्रवणात् निचृद्गायत्रीत्वेन श्रवणाभावाच्च। आर्भावविधौ **इन्द्रमच्छा** (सा.६९४) इत्येकाक्षरन्यूनायामुष्णिहि पौष्कलमधिकृत्य **उष्णिक्ककुभावेते भवतः** (ता.ब्रा.८.५.१) इति केवलोष्णिक्त्वेन श्रवणात् **देवा वा अग्निष्टोममभिजित्योक्थानि नाशक्नुवन्** (तां.ब्रा.८.८.१) इत्याद्युक्थविधायकब्राह्मणे **आयाहीन्द्र** (सा.६६६-६७१) इति

3. $S^{1-2}$ Om. मध्ये . . . भुरिगायत्री।
13. $S^{1-2}$ Om. प्राणो . . . स्तुवन्ति।
15. A Om. अपि।
18. A विधा for विधौ।
20. $S^{1-2}$ P (उ) ष्णिक्त्वं for (उ) ष्णिक्त्वेन



नार्मेधमधिकृत्य **ककुप्प्रथमाथोष्णिगथ पुर उष्णिगनुष्टुबिति** (तां.ब्रा.८.८.२६) एकाक्षरन्यूनतायाः ककुभः केवलककुप्त्वेन श्रवणात् निचृत्ककुप्त्वेन श्रवणाभावाच्च। षड्विंशब्राह्मणे **पुरोजिती** (सा.६९७) इति एकाक्षरन्यूनायामनुष्टुभि **श्यावाश्वान्धीगवे** अधिकृत्य **द्वे अनुष्टुभि सामनी** (ष.ब्रा.१.३.१२) इति केवलानुष्टुप्त्वेन श्रवणात्। एवमन्येषामपि एकाक्षरन्यूनानां छन्दसामस्मद्ब्राह्मणादिषु निचृच्छन्दस्त्वेन व्यवहारादर्शनात् **गुणे त्वन्याय्यकल्पना** (जै.सू.९.३.१५) इति मीमांसान्यायेन तयोर्निचृद्भुरिजोः पूर्वोत्तराडादीनां च विकल्प इत्यवगन्तव्यः। निचृद्विष्टप्रयोगे फलं **तेषां त्रयम्** (नि.सू.१.६.१८) इत्यत्र वक्ष्यामः। **तत्सवितुर्वरेण्यमि**त्यस्यास्त्रयो विंशत्यक्षराया गायत्र्या आद्यपादस्याष्टाक्षर पादविकारसप्ताक्षरपादत्वं **दशाक्षरैकादशाक्षरौ गुरुवृत्ती** (नि.सू.१.१) इत्यत्र प्रतिपादितम्। तस्मात् तस्या अपि निचृद्गायत्रीत्वस्य विकल्पितत्वात् त्रयोविंशत्यक्षराया एव केवलगायत्रीत्वात्। तज्जपकाले यथाध्ययनं त्रयोविंशत्यक्षराया एव जपः कर्तव्यः। गायत्रीकवचे **वरेण्यं कटिदेशं तु भर्गो नाभिं तथैव च**। इति संयुक्तपाठदर्शनाच्च। ननु तत्रैव-

**णिकारतूर्ध्वमोष्ठं तु यंकारस्त्वधरोष्ठकम्**। इति

गायत्र्यक्षरन्यासादौ च **णिन्नमः यन्नमः** इति विकर्षदर्शनात् यथाध्ययनं बाधित्वा चतुर्विंशत्यक्षराया एव जपः कर्तव्यः इति चेत्। न। अङ्गन्यासादौ विकर्षविधानात् नित्यजपे विकर्षेण जपः कर्तव्यः इति वचनाभावाच्च यथाध्ययनं त्रयोविंशत्यक्षराया एव जपः कर्तव्यः। ण्यमित्येव जपः इति भारद्वाजस्मृतौ दर्शनात् अत्र त्रयोविंशत्यक्षरा निचृद्गायत्री पञ्चविंशत्यक्षरा

2. $S^{1}$ ककुप्त्वं for ककुप्त्वेन
6. A Om. एक। $S^{1-2}$ न्यून for न्यूनायां।
7. A कल्पना for कल्पेन।
14. $S^{1}$ after अक्षरायाः ins. केवलगायत्रीत्वात्।
15. A अक्षरप्रदर्शनात् for पाठदर्शनात्।
17. A अक्षर।
20. $S^{1-2}$ Om. त्रयोविंशत्यक्षाराया एव।

भुरिक् गायत्री। एवं निचृदुष्णिगादयोऽपि द्रष्टव्याः। अत्र बह्वृचानां पक्षद्वयम्। तथाहि -

एकाद्व्यूनाधिका सैव निचृदूनाधिका भुरिक् ।

(ऋ.प्रा.१७.२) इति शौनकः। तत्र तद्व्याख्यातृपार्षदवृत्तिकारेण चतुर्विंशत्यक्षरादीनां चतुःशताक्षरपर्यन्तानां त्रिःसप्तानां छन्दसामेष विशेषः उपदिश्यते इत्युक्तम्। ऊनाधिकेनैकेन निचृद्भुरिजौ (ऋ.अ.१.३.४) इति सर्वानुक्रमणीकारः कात्यायनः। तत्र तद्व्याख्यातृ षड्गुरुशिष्येण गायत्र्यादिजगत्यन्तानां सप्तानां छन्दसामेष विशेष उपदिश्यत इत्युक्तम्। उदाहरणानि तु निचृद्गायत्री **उच्चातेजातमन्धसः** (सा.४६७)। निचृदुष्णिक् - **इन्द्रमच्छसुता इमे** (सा.५६६)। निचृत्ककुप् **अधाहीन्द्र गिर्वणः** (सा.४०६)। निचृदनुष्टुप् **गायन्ति त्वा गायत्रिणः** (सा.३४२)। निचृत् बृहती **तरणिरित्सिषासति** (सा.२३८)। निचृत् पङ्क्तिः **इन्द्रो मदाय वावृधे** (सा.४११)। निचृत् त्रिष्टुप् **योनिष्ट इन्द्रसदने अकारि** (सा.३१४)। निचृज्जगती - **वृषामतीनां पवते विचक्षणः** (सा.५५९)। एवं निचृद्विधृत्यादयोऽपि द्रष्टव्याः॥ २॥

**तान्येतानि सर्वाणि त्रेताकलिच्छन्दांसि भवन्ति॥ ३॥**

**तत्त्व० - तान्येतानि सर्वाणि** निचृतो भूरिजश्च क्रमेण (. . .)॥३॥

**तद्यत्त्रेतास्थानं ता निचृतः। अथ यत्कलिस्थानं ता भुरिजः॥ ४॥**

**तत्त्व०** - (नोपलभ्यते)॥ ४॥

**छन्दो०** - स्पष्टोऽर्थः॥ ४॥

**चतुष्टयेनच्छन्दो जिज्ञासेत। पदैरक्षरैर्वृत्त्या स्थानेनेति॥ ५॥**

**तत्त्व०** - (नोपलभ्यते)॥ ५॥

6. $S^{2}$ Om. उपदिश्यते।
17. $S^{1-2}$ P after क्रमेण (. . .) lacuna upto वचनात् (छ.वि.२.२.७)।
22. $S^{1}$ पादैः for पदैः।



**छन्दो०** - छन्द इति जातावेकवचनम्। पदशब्दः पादवचनः। **उत्तमं पदं प्रतिहारस्थानम्** (प्र.हा.सू.१.२) इतिवत्। संशयितानि छन्दांसि। अष्टाक्षरपादैश्चतुर्विंशत्याद्यक्षरैः। वृत्तिस्तु व्याख्यानमिति प्रसिद्धम्। तथा च। **व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्** (पा.म. लण्-सूत्रे) इति वैयाकरणप्रसिद्धेः। यद्वा वृत्तिः समाख्या व्याख्येतिवत्। सा तु तन्त्रविशेषस्य संज्ञा। तथा च **श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्** (जै.सू.३.३.१४) इति मीमांसकानां प्रसिद्धा। तया समाख्यया **स्थानेन** तत्तच्छन्दःस्थानेन च। तत्तच्छन्दःस्थानं तु अनन्तरमेव अतिरात्रक्लृप्तौ वक्ष्यामः। एतेन **चतुष्टयेन** हेतुना संशयितानि **छन्दांसि जिज्ञासेत** निश्चिनुयादित्यर्थः। उदाहरणं तु उपरितनसूत्रानन्तरं वक्ष्यामः॥ ५॥

**छन्दो०** - तेषां किं व्यस्तैः समस्तैः वा निर्णय इत्यत आह -

**तेषामेकैकस्मिन् दुष्यति शेषेणैव जिज्ञासेत्॥ ६॥**

इति। **तेषां** पादादीनां मध्ये **एकैकस्मिन् दुष्यति** छन्दः साधयितुमसमर्थे सति यथासंभवं **शेषेणैव जिज्ञासेत्** निश्चिनुयादित्यर्थः। पूर्वसूत्रशेषोऽयम्॥ ६॥

**न दुष्टस्य च्छन्दसोऽन्येन वृत्तेर्ज्ञानमस्तीति विद्यात्॥ ७॥**

**तत्त्व०** - (. . .) वचनात् **अन्येन ज्ञानं** छन्दोविशेषज्ञानं नास्तीति विद्यात्॥ ७॥

**छन्दो०** - वृत्तित्यतिरिक्तेष्वसमर्थेषु सत्सु वृत्त्या जानीयादित्याह - न

1. A उपशब्दः पादवचनम् for पद. . . वचन।
1. $S^{1-2}$ Om. उत्तमं . . . . . इतिवत्।
3. A व्याख्यातम् for व्याख्यानम्।
3. A Om. इति प्रसिद्धम्।
5. $S^{1-2}$ पाणिनीयपरिभाषावचनात् for वैयाकरणप्रसिद्धेः।
6. A कुतः for तथा च।
6. A प्रमाण for प्रकरण।
8. $S^{1-2}$ after समाख्यया add : च।
18. P वचनेन for वचनात्, vide ln. no. 17 on pp. 144.

**दुष्टस्येति**। निगदेन व्याख्यातम् ॥

पूर्वसूत्रद्वयस्योदाहरणानि तु - **यजामह इन्द्रम्** (सा.३३४) इत्यस्यास्त्रिष्टुप् वा जगती वेति संशये पादैरक्षरैः समाख्यया च त्रिष्टुप् भवति। त्रिष्टुप्नामकं (ज्ञानं भवति)। तन्त्रविशेषे पाठः समाख्या ॥

**सोमाः पवन्त इन्दवः** (सा.५४८) इतीयमुष्णिग्वानुष्टुब् वेति संशये पादैः स्थानेन च अनुष्टुप् भवति। स्थानं तु द्वादशाहदशरात्रषष्ठेऽहन्यार्भवपवमाने चतुर्थच्छन्दसः अनुष्टुप्स्थाने **सोमाः पवन्त इन्दव इति अनुष्टुभो निभसदो भवन्तीति** (तां.ब्रा.१३.११.६) ब्राह्मणे पाठः।

**प्रत आश्विनीः** (सा.८८६) इतीयं त्रिष्टुब् वा जगती वेति संशये व्यूढदशरात्रचतुर्थाहबहिष्पवमानप्रतिपदि गायत्रीस्थानापन्नजगतीस्थाने **प्रत आश्विनीः पवमानधेनवः इति चतुर्थस्याहः प्रतिपत् भवति** (तां.ब्रा.१२.७.१) इति ब्राह्मणे पाठात् स्थानेन पादैश्च जगत्येव भवति। **ससुन्वे यो वसूनाम्** (सा.५८२) इतीयं गायत्री वा ककुब्वेति संदेहे द्वादशाहब्राह्मणे षष्ठेऽहन्यार्भवे पवमाने ककुप्पाठात् पादैः स्थानेन च। ककुभः स्थाने **परिस्वानो गिरिष्ठा** इति **परिवत्यो गायत्र्यो भवन्ति सर्वस्य पर्याप्त्यै ससुन्वेयो वसूनाम्** (तां.ब्रा.१३.११.१-२) इति पाठात् पादैश्च स्थानेन च ककुबेव भवति। अत एव गिरिष्ठा ससुन्वे प्रगाथ इति प्रयोगः ॥

**उप शिक्षापतस्थुषः** (सा.७६१) एषा गायत्री वोष्णिग्वा ककुब्वेति संशये एतास्तिस्रोऽपि भवन्ति। तथाहि **स्तोमो युज्यत** (तां.ब्रा.११.१.१) इत्यनुवाकेन द्वादशाहदशरात्रप्रथमेऽहनि **अस्य प्रत्ना** (सा.७५५-७६३)

3. $S^{1-2}$ before संशये ins. छन्दः।
7. A Om. चतुर्थच्छन्दसः; $S^{1}$ च्छन्दसि for च्छन्दसः।
8. A गसदो for निभसदो।
9. $S^{1-2}$ संदेहे for संशये।
15. $S^{1}$ after भवन्ति ins. इति।
16. $S^{2}$ Om. पाठात् . . . स्थानेन।
17. A प्रसिद्धिः for प्रयोगः।
19. $S^{1-2}$ संदेहे for संशये।
20. $S^{1-2}$ Om. दश।



नवर्चं बहिष्पवमानं विहितम्। एतत् बहिष्पवमानस्य गायत्रीत्वात् **उपशिक्षे**त्यस्याश्चत्र पाठात्। अत एव तत्र कल्पभाष्यकारः प्रथमे त्र्यहे स्वस्थान एव गायत्र्यादीनां स्थितिरित्यवोचत्। किंच अनन्तरमेव द्वितीयत्र्यहे तत्र यद्यपि गायत्र्याः सर्वमेव प्रातःसवनं स्थानमित्यन्ववादीच्च। अतो गायत्री भवति। तथा उष्णिगपि भवति। उष्णिक् स्थाने दर्शनात्। तथा हि क्षुद्रकल्पे प्रथमाध्याये कल्पकारः **योनेर्यज्ञं तन्वानस्य यज्ञायज्ञीयं बहिष्पवमानं ससुन्वे यो वसूनाम् उपशिक्षापतस्थुष इति सफपौष्कले यज्ञायज्ञीयस्यर्क्षु गायत्रमग्निष्टोमसाम। समानमितरं ज्योतिष्टोमेन। तस्य संपत् षडक्षराणि बहिष्पवमानादतिरिच्यन्ते। तावदुष्णिक्ककुब्भ्यां लुप्यते। तत्संपन्नम्** (क्षु.क.सू.१.२४) इति अत्र **उपशिक्षे**त्यस्य उष्णिक्स्थाने पाठात्। तत्र कल्पभाष्यकारः **तस्य संपत् षडक्षराणि बहिष्पवमानादतिरिच्यन्ते। ससुन्वे यो वसूनाम् इत्यस्यास्तु न्यूनाक्षरायाः ककुभश्चत्वार्यक्षराणि ह्रसन्ते। उपशिक्षेत्यस्या उष्णिहो द्वे इत्येवं षडक्षराणि ह्रसन्ते** इत्युक्तवान्। तस्मात् उत्तमपादो द्वादशाक्षरपादविकारः मध्यमोऽष्टाक्षरपादविकारः इत्यवगन्तव्यम्। तथा ककुबपि भवति। ककुप्स्थाने दर्शनात्। तथा च क्षुद्रकल्पे कल्पकारो **ज्योगामयाविन आनो मित्रावरुणा - दवि द्युतत्या रुचा - पवमानस्य ते कवे - इति बहिष्पवमानम्** (क्षु.सू.१.२.१) इत्यादिना ज्योगामयाविसंज्ञकक्रतुक्लृप्तौ **इन्द्रं विश्वा अवीवृधन्निति कालेयम्। उपशिक्षापतस्थूष इति सफ**मिति सफं विधाय **तस्य संपत् षोडशाक्षराणि**

5. A Om. तथा।
5. A Om. हि।
5. $S^{1-2}$ कल्पसूत्रे for कल्प।
6. A Om. प्रथमाध्याये कल्पकारः।
11. A कारेण for कारः।
14. A व्याख्यातम् for उक्तवान्।
16. A Om. क्षुद्रकल्पे।
16. A सूत्रकारो for कारो।
20. $S^{1-2}$ Om. after इति ins. अवोचत्। तत्र
20. $S^{1-2}$ Om. सफं विधाय . . . उक्तवान्।

**रथन्तराल्लुप्यन्ते** (क्षु.क.१.२.५) इत्यादिना संपदमुक्तवान्। ककुप्स्थाने पाठात्। अत एव तत्र कल्पभाष्यकारेण अनुष्टुप्सु विहितात् कालेयात् सप्तदशस्तोमात् सर्वबृहतीकप्रकृतकालेयापेक्षया अष्टषष्टिरक्षराणि न्यूनायां च ककुभि विहितात् सफात् द्वे अक्षरे इत्येवं सप्ततिरक्षराणि ह्रसन्ते इत्युक्तम्। तस्मादुपशिक्षेति तिस्रोऽपि भवन्ति।

**न किष्टं कर्मणा नशत्** (सा.२४३) इति वैखानससाम्नः पादाभ्यासेन जगती वा, बृहत्यां पाठात् बृहती वेति संशये द्वादशाहदशरात्रसप्तमेऽहनि ब्राह्मणे **न किष्टं कर्मणानशदिति बृहत्यः सत्योऽभ्यारम्भेण जगत्यः** (तां.ब्रा.१४.४.२) इति बृहती स्थाने पृष्ठविधानात् स्थानसमाख्याभ्यां बृहत्येवेति चेत्। न। **श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यम्** (जै.सू.३.३.१४) इति न्यायेन वाक्यापेक्षया स्थानसमाख्ययोः दौर्बल्यात् **बृहत्यः सत्योऽभ्यारम्भेण जगत्य** इति वाक्येनैव जगतीविधानात् पादैरक्षरैश्च जगती भवति। अत एव द्राह्यायणः **योनौ यान्यभ्यासेनान्यच्छन्दः संपद्यते। यथा गौरीवितौदलकौत्सत्रैककुभ वैखानसानि** (द्रा.श्रौ.२०.४.२५) इति।

**य एक इद्विदयते** (सा.३८९) इति त्रैककुभस्योष्णिग्वा उपरिष्टाद्बृहती वेति संशये द्वादशाहनवमाहोक्थविधौ ब्राह्मणे **त्रैककुभं भवत्योजस्येव तद्वीर्ये प्रतितिष्ठति** (तां.ब्रा.१५.६.५) इति ककुप्स्थाने विधानात् वैखानसवत् ब्राह्मणे विशिष्य च्छन्दोविध्यभावात् च **एकञ्छन्दः ककुबुष्णिहौ** (ष.ब्रा.१.३.१२) इति श्रुतेश्च स्थानेन उष्णिक् भवति। अत एवात्र कल्पभाष्यकारो **य एक इद्विदयते** (सा.३८९) इत्युष्णिक्षु

3. A बृहतीत्व for बृहतीक।
5. $S^{2}$ Om. अपि; A Om. अपि भवन्ति।
13. A after जगती ins. विशिष्टः।
14. A Om. अत एव . . . वैखानसानीति।
19. $S^{1-2}$ Om. ओजस्येव . . . तिष्ठति।



त्रैककुभमित्यवोचत् इति चेत्। उच्यते। उपरिष्टाद्बृहत्येव भवति। **योनौ यान्यभ्यासेन** (द्रा.श्रौ.२०.४.२५) इत्यादिद्राह्यायणवचनात् पादैरक्षरैश्च सैव भवति। कल्पभाष्यकारस्तु यथाश्रुतब्राह्मणवाक्यः सन् सूत्रं विस्मृतवान्।

**गायन्ति त्वा** (सा.१३४४) इत्युद्वंशीयस्य पङ्क्तिर्वा अनुष्टुब् वेति संशयेऽनुष्टुबेवेति अनुष्टुप्प्रकरणे उक्तम्। **पुरोजिती** (सा.६९७) इत्यानिधनत्वाष्ट्रीसाम्नः पदाभ्यासेन अक्षराधिक्येऽपि अङ्गिरसामयनच्छन्दो भवति। दशरात्रे सप्तमेऽहनि आर्भवे **पुरोजिती वो अन्धस इति गौरीवितं च कार्तयशं च त्वाष्ट्रीसामनी स्वारं चाष्कारणिधनं चेति** हि कल्पसूत्रम्। अतः स्थानेन अनुष्टुप् भवति।

**सुरूपकृत्नुमूतये** (सा.१२८७) इति ऋषभोरैवतस्य **सुरूपकृत्नुमूतय इत्यभ्यारम्भेण षट्पदा** (तां.ब्रा.१३.१०.२) इति षष्ठेऽहनि ब्राह्मणात् पादैरक्षरैश्च जगती भवति। **प्रान्तमा वो अन्धसः** (सा.७१३) इति रात्रिपर्यायसाम्नां पादाभ्यासस्य प्रथमानि पदानि पुनरादीनि भवन्ति। **प्रथमस्य पर्यायस्य मध्यमानि पदानि पुनरादीनि भवन्ति। मध्यमस्य पर्यायस्य उत्तमादीनि पदानि पुनरादीनि भवन्ति। उत्तमस्य पर्यायस्य** (तां.बा.६.१.४., १६; १९) इति ब्राह्मणे श्रवणात् तन्मात्रेणैव ऋषभरैवतच्छन्दोऽन्तरवदनुष्टुबेव भवति।

**आप्यायस्वेत्येतया गायत्र्या तां तृतीयसवने द्विर्ब्रूयुः** (द्रा.श्रौ.५.१.१०;१२) इति द्राह्यायणेनोक्तम्। तस्या गायत्रीत्वेऽपि पुरस्तात्

1-2. A वैखानसवत् ब्राह्मणच्छन्दोविध्यभावेऽपि योनौ यान्यभ्यासेनान्यच्छन्दः संपद्यन्ते। यथा गौरीवितौदलकौत्सत्रैककुभवैखानसानीति द्राह्यायणसूत्रे छन्दोऽन्तरत्वेनानुवादात् for उपरिष्टाद् . . . वचनात्।
3. A उपरिष्टाद्बृहती for सा।
3. $S^{1-2}$ द्राह्यायणसूत्रं for सूत्रं।
7. $S^{1-2}$ Om. भवति।
7. $S^{1-2}$ दशाह for दशरात्रे।
11. $S^{2}$ पाद for पदा।
16. A विधानात् for श्रवणात्।
17. $S^{1-2}$ Om. ऋषभरैवतच्छन्दोऽन्तरवत्।
19. A अत्र for द्राह्यायणेनोक्तम्।

कीर्तनं यतो गायत्रं प्रातःसवनमतो गायत्र्यैवाप्यायनं कर्तव्यमिति हेतुवादार्थम्। अत एव माध्यंदिनस्य **त्रैष्टुभं माध्यंदिनम्** (तां.ब्र.६.३.११) इति श्रुतेः त्रैष्टुभत्वात् **सं ते पयांसि** (सा.६०६) इति त्रिष्टुभाप्यायनं कर्तव्यमिति विहितम्। तस्मात् **तां तृतीयसवने द्विर्ब्रूयुरिति** द्विर्वचनविधानं जगतीसंपत्त्यर्थमेव। **जागतं तृतीयसवनम्** इति श्रुतेः। एवमन्येषामभ्यासवतां साम्नां ब्राह्मणसूत्राद्यनुसारेण छन्दांसि निश्चेतव्यानि।

तृतीयस्योदाहरणं तु **त्वामिद्धि** (सा.२३४) **मा न इन्द्र परावृणक्** (सा. २६०) इत्यनयोरनुष्टुब् वा बृहती वेति संशये समाख्यया बृहत्येव भवति।

अथेदानीं तत्तच्छन्दः स्थानं वदामः। अत्र द्राह्यायणः - **छन्दोदैवत सामान्तयोगान्न्यायान् ब्रुवते। यथा षोडशिमतोऽतिरात्रस्य ज्योतिष्टोमस्य उक्थोत्तमेऽनुष्टुभो न्याय्याः। विच्छन्दसस्तु वचनात्** (द्रा.श्रौ.१५.१.१-३) इति सूत्रत्रयम्। तत्राद्यस्यायमर्थः - यथा येन प्रकारेण षोडशिमतोऽतिरात्रसंस्थस्य ज्योतिष्टोमस्य छन्दोयोगा दैवतयोगा सामान्तयोगाश्च भवन्ति तांस्तेनैव प्रकारेण क्रत्वन्तरेष्वपि न्यायान् उक्त(थ?) न्यायविदो ब्रुवते इति ज्योतिष्टोमप्रकृतित्वादितरेषां क्रतूनाम्। द्वितीयस्यायमर्थः - उक्थानि त्रीणि भवन्ति। तेषामुत्तमस्तोत्रे विकृतिषु सर्वासु अनुष्टुभ एव न्याय्या इति। तृतीयसूत्रस्यायमर्थः - उक्थोत्तमे विकृतौ विच्छन्दसो भवन्ति इति वचनादिति।

एतत्सूत्रत्रयस्य उदाहरणानि अतिरात्रक्लुप्तौ स्पष्टानि। तथा हि अतिरात्रो द्विविधः। अषोडशिकः षोडशिमांश्चेति। तथा च कल्पसूत्रम् -

2. A Om. त्रैष्टुभं . . . श्रुतेः।
2. $S^1$ after माध्यंदिनं adds : सवनं।
3. A Om. त्रिष्टुभा . . . कर्तव्यमिति।
4. A द्विर्वचनं for द्विर्वचनविधानं।
5. A Om. एव।
5. A तृतीयसवनस्य जागतत्वात् for जागतं तृतीयसवनम्।
6. $S^1$ ब्राह्मणब्राह्मणाद्यनु $S^2$ ब्राह्मणाद्यनु for ब्राह्मणसूत्राद्यनु।
11. A उक्थ्य for उक्थ।
19. A उदाहरणप्रदर्शनार्थमतिरात्रक्लृप्तिरुच्यते for उदाहरणानि . . . तथाहि।
20. A षोडशिकः for षोडशिमांश्च।



**क्लुप्तो ज्योतिष्टोमोऽतिरात्रोऽषोडशिको यदि वा षोडशिमान्** (आ.क.६.१.१) इति। द्विविधोऽप्ययं ब्राह्मणे क्लुप्त इत्यर्थः। तत्र छन्दोयोगप्रदर्शनार्थं तत्र षोडशिमतोऽतिरात्रसंस्थस्य ज्योतिष्टोमस्य ब्राह्मणोक्तस्तोत्रमात्रस्य क्लुप्तिं च ब्रूमः। तद्यथा - **उप-दवि-पवेति** (सा.६५१-५९) बहिष्पवमानम्। **अग्न आनो मित्रायाहीन्द्राग्नीत्याज्यानि** (सा.६६०-७१)। अत्र बहिष्पवमानं सर्वं चत्वार्याज्यानि च गायत्र्याः स्थानम्। **उच्चाते जातमन्धसः** (सा.६७२-६७४) इति गायत्र्यां गायत्रामहीयवे। **पुनानः सोम धारया** (सा.६७५-६) इति बृहत्यां रौरवयौधजये। **प्रतुद्रव** (सा.६७७-९) त्रिष्टुभि औशनमन्त्यम् इत्येवं क्रमेण गायत्री बृहती त्रिष्टुभां त्रिच्छन्दा माध्यंदिनः पवमानः स्थानम्। **अभि त्वा शूर नोनुम** (सा.६८०) इति ककुबुत्तराबृहत्यां रथन्तरम्। **कयानश्चित्र आभुवत्** (सा.६८२) इति गायत्र्यां वामदेव्यम्। **तं वोदस्ममृतीषहम्** (सा.६८५) इति बृहत्यां नौधसम्। **तरोभिर्वो विदद्वसुम्** (सा.६८७) इति बृहत्यां कालेयम्। इत्येवंक्रमेण चत्वारि पृष्ठानि। **स्वादिष्ठयेति** (सा.६८८) गायत्र्यां गायत्रसंहिते। **पवस्वेन्द्रमच्छ** (सा.६९२) इति ककुबुष्णिहोः सफपौष्कले एकर्चे। **पुरोजिती** (सा.६९७) त्यनुष्टुभि श्यावाश्वान्धीगवे। **अभिप्रियाणि** (सा.१७६२) इति जगत्यां कावमन्त्यम्। इत्येवं क्रमेण गायत्रीककुबुष्णिगनुष्टब्जगतीनां पञ्चच्छन्दा आर्भवपवमानः स्थानम्।

**यज्ञायज्ञ** (सा.७०६) इति ककुबुत्तराबृहत्यां यज्ञायज्ञीयमग्निष्टोमसाम। **एह्यूषु** (सा.७०५) इति गायत्र्यां साकमश्वम्। **वयमुत्वा** (सा.७०८) इति ककुभि सौभरम्। **अधाहीन्द्र** (सा.८१०) इति ककुभि **वार्णत्वा**(सा.७११) इत्युष्णिहि **युञ्जन्ति हरी** (सा.७१२) इत्युपरिष्टात् ज्योतिरनुष्टुभि। एवंविधच्छन्दःसु नार्मेधमित्युक्थानि। इयं ज्योतिष्टोमस्य उक्थानामुत्तरे सौभरनार्मेधे अतिरात्र इति गौतम इति।

6. $S^{1-2}$ Om. अत्र।
6. A गायत्र्याः ins. तत्तत्।
15. A Om. एकर्चे।
24. $S^{1-2}$ गौतममतिः for गौतम इति।

इन्द्रजुषस्वेति स्वराडनुष्टुभि। **इन्द्र जठरं नव्यम्** (सा.९५३) इत्यनुष्टुभि। **इन्द्रस्तुराषाण्मित्रो न** (सा.९५४) इति स्वराडनुष्टुभि च गौरीवितं षोडशिसाम। **पान्तं-प्रवङ्-वयमुत्वातदिन्द्राय** (सा.७१३-२४) इत्यनुष्टुप्सु वैतहव्यशाक्त्यकाण्वश्रौतकक्षाणि चत्वारि सामानि अतिरात्रे प्रथमः पर्यायः। **अयं त आ तू-अभि त्वा-इदं वसो** (सा.७२५-३६) इत्यनुष्टुप्सु दैवोदास और्ध्वसद्मनोरन्यतराकूपारार्षभगाराणि चत्वारि सामानि द्वितीयः पर्यायः। **इदं ह्यनु-आत्वा-योगे-इन्द्र सुत** (सा.७३७-७४८) इत्यनुष्टुप्सु घृतनिधनदैवातिथसौमेधकौत्सानि चत्वारि सामानि तृतीयः पर्यायः। **एना प्रत्यु इमा उवेति** (सा.७४८-५४) ककुबुत्तरासु बृहतीषु रथन्तराणि संधिसामानि इति षोडशिमदतिरात्रक्लृप्तिः। एतदेव **इन्द्रजुषस्वे** (सा.९५२)ति गौरीवितव्यतिरेके सति अषोडशिकातिरात्रक्लृप्तिः। षोडशिमदतिरात्रप्रकारेणैव उक्थोत्तमस्तोत्रच्छन्दो विनात्र इतरेष्वपि छन्दसां स्थानं वेदितव्यम्। तत्र विकृतिषु सर्वासु उक्थोत्तमेऽनुष्टुभ एव न्याय्याः। **उक्थोत्तमेऽनुष्टुभो न्याय्याः** (द्रा.श्रौ.१८.१.२) इति वचनात्। एवं विकृतिषु सर्वासु अतिदेशतः प्राप्तानां छन्दसां कल्पसूत्रोत्तरऋक्-ब्राह्मणासाम्नायानुसारेणापवादोऽपि द्रष्टव्यः। तदुक्तम् - **अन्वध्यायमपवादनिशामनम्** (द्रा.श्रौ.१८.१.५) इति। तद्यथा - **व्यूढद्वादशाहदशरात्रस्य छन्दांसि वा अन्योन्यस्य लोकमभ्यध्यायन्। गायत्री त्रिष्टुभः। त्रिष्टुप् जगत्याः। जगती गायत्र्याः। तानि व्यौहन्**

1. A before स्वरङ् ins. तत्तत्।
1. A Om. इन्द्रजठरं . . . स्वराडनुष्टुभि।
4. A वैतहव्यादीनि for वैतहव्य . . . कक्षाणि।
4. $S^1$ रात्रेः for अतिरात्रेः, $S^2$ Om. अतिरात्रे।
6. $S^{1-2}$ after सामानि add: रात्रेः।
10-11. A Om. एतदेव . . . क्लृप्तिः।
12. A एतत् for षोडशिभत्।
18. $S^1$ after छन्दांसि adds: छन्दा इति।
19. A व्यूहानि for व्यौहन्।



**यथालोकम्** (तां.ब्रा.१०.५.१३) इति ब्राह्मणे लक्षणमुक्तम्। अस्यार्थः - छन्दांसि गायत्र्यादीनि परस्परस्य स्थानमकामयन्त। कुत्रेत्यपेक्षायामुक्तं गायत्रीति। गायत्री त्रिष्टुभः स्थानम्। त्रिष्टुप् जगत्याः स्थानम्। जगती गायत्र्याः स्थानमकामयन्त। अत्रान्योन्यस्येत्युपक्रमसामर्थ्यात् त्रिष्टुप् गायत्र्याः स्थानमकामयत। जगती त्रिष्टुभः स्थानमकामयत। गायत्री जगत्याः स्थानमकामयतेत्यपि कथितं भवति। तान्यभिध्यानपरस्परलोकानि छन्दांसि यथालोकं व्यौहन् यथाभिध्याने स्थाने विभागेनातिष्ठन्निति। एवं स्थिते द्वादशाहस्य संभवति प्रथमे त्र्यहे स्वस्थान एव गायत्र्यादीनां स्थितिः। द्वितीये त्र्यहे गायत्रीत्रिष्टुभः त्रिष्टुप् जगत्याः जगती गायत्र्याः इति व्यूहः। तृतीये व्यूहे त्रिष्टुप् गायत्र्याः जगती त्रिष्टुभः गायत्री जगत्याः इति व्यूहः। तत्र यद्यपि गायत्र्याः सर्वमेव प्रातः सवनं स्थानं तथाप्याज्यबहिष्पवमानप्रतिपत्स्वेव छन्दोऽन्तरनिवेश इति ऋक्समाम्नायात् ब्राह्मणसमाम्नायाच्चावसीयते। त्रिष्टुभः स्थानं माध्यंदिनमित्यत्रान्त्यतृच इति तत्र छन्दोऽन्तरनिवेशः। एवं जगतीस्थानेऽपि आर्भावान्त्यतृचे छन्दोऽन्तरनिवेशः। एतान्यप्यपवादोदाहरणानि। एवमन्यान्यपि द्रष्टव्यानि। तस्मादुत्सर्गापवादाभ्यां तत्तच्छन्दोस्थानानि निश्चित्य छन्दांसि ज्ञातव्यानि इति संशयच्छन्दोनिर्णयः॥ ७॥

## अथ देवासुरच्छन्दांसि॥ ८॥

2. A कामयन्ते for अकामयन्त।
4. A कामयन्तः for अकामयन्त।
5. A कामयते for अकामयत।
5. A Om. अकामयत्।
7. $S^1$ after लोकं ins. इति।
7. A व्यूहन् for व्यौहन्।
8. $S^{1-2}$ गायत्र्याः for गायत्र्यादीनां।
12. A (अ)न्तरं निवेश्यति for (अ)न्तरनिवेश इति।
13. A दिनान्त्यं for दिनमित्यत्रान्त्य।
13. $S^1$ निर्देशः for निवेशः।
16. $S^{1-2}$ निश्चेतव्यानि for निश्चित्य।
16. $S^{1-2}$ Om. छन्दांसि ज्ञातव्यानि।

तत्त्व० - व्याख्यास्याम इति शेषः ॥ ८ ॥

छन्दो० देवच्छन्दांस्यसुरच्छन्दांसि च वक्ष्याम इत्यर्थः ॥ ८ ॥

**एकाक्षरप्रभृतीन्येकोत्तराण्यारोहीणि देवच्छन्दांसि** ॥ ९ ॥

तत्त्व० - आरोहीणि गायत्र्यादीनि जगत्यन्तानि **एकोत्तराणि** देवानां तान्येवैकाक्षराणीति । स्पष्टमन्यत् । पूर्वं छन्दोत्तरोत्तराणि छन्दांसि । आरोहन्तीति आरोहीणि । तथा च शौनकः - **दैवान्यपि च सप्तैव** (प्रा.१६.३) इति ॥ ९ ॥

तत्त्व० - एवं सति जगत्यादेरक्षरपरिमाणं दर्शयति -

**सप्ताक्षरा जगत्यष्टाक्षरातिच्छन्दाः** ॥ १० ॥ स्पष्टम् ॥ १० ॥

छन्दो० - **एकाक्षर . . . अतिच्छन्दा** इति । एकाक्षरादारभ्य उत्तरोत्तराण्येकैकाक्षरारोहीणि देवानां गायत्र्यादिच्छन्दांसि भवन्ति । सप्ताक्षरा देवानां जगती अष्टाक्षरातिच्छन्दा भवति । श्रूयते च - द्वादशाहब्राह्मणे **एकाक्षरं वै देवानामवमं छन्द आसीत् । सप्ताक्षरं परमम्** (तां.ब्रा.१२.१३.२७) इति । एतदुक्तं भवति - देवानां गायत्री एकाक्षरा । द्व्यक्षरोष्णिक् । त्र्यक्षरानुष्टुप् । चतुरक्षरा बृहती । पञ्चाक्षरा पङ्क्तिः । षडक्षरा त्रिष्टुप् । सप्ताक्षरा जगती । अष्टाक्षरा अतिच्छन्दा इति । देवगायत्री । **ओं भूः** । अत एव प्रणवस्य ऋषिर्ब्रह्मा देवी गायत्री छन्दः । इत्याबालं प्रसिद्धिः । उष्णिक् । **ओं भुवः** । अत एव भूर्भुवस्स्वस्य व्याहृतीनाम् अत्रिर्देवी गायत्र्यग्निः भृगुर्देवी उष्णिग्वायुरिति प्रसिद्धिः । अनुष्टुप् व्याहृतिषु पुरुषः बृहती **एवाह्येव** (सा.६५०) । यजुःशाखिनां काण्डऋषितर्पणेऽपि हव्यवाहः । तदुक्तं स्मृतिसंग्रहे -

वामदेवो ऋषिः प्रोक्तो हव्यवाहो विशेषतः ।
देवी च बृहती छन्दः . . . ॥ इति ।

पङ्क्तिः । **एवाहि पूषनत** (सा.६५०) । तत्रैव अग्निः काण्डऋषिः ।

12. A द्वादशाहे for द्वादशाहब्राह्मणे ।
18. A भूर्भुवः for ओं भुवः ।
21. A संघे for संग्रहे ।



तदुक्तं स्मृतिरत्ने -

अग्निः काण्ड ऋषिश्चापि वामदेव ऋषिस्ततः ।
छन्दस्तु पङ्क्तिर्भवति . . . ॥ इति ।

इदमप्युदाहरणम् । भूर्भुवः स्वः । त्रिष्टुप् काण्डऋषितर्पणे **याज्ञिकीर्देवता** ।

तदुक्तं स्मृतिरत्ने -

याज्ञिकीर्देवता चापि वामदेव ऋषिः स्मृतः ।
त्रिष्टुप् छन्दस्तु इति ॥

जगती । अदितेनु मन्यस्व (तै.सं.२.३.१.२) । इयं प्राजापत्या गायत्रीति स्मृतिरत्ने उक्तम् । तन्न संगच्छते । सप्ताक्षरत्वात् । **विश्वान् देवान् काण्डऋषीन्** । तदुक्तम् -

विश्वान् देवान् काण्डऋषीन् वामदेव ऋषिः स्मृतः ।
छन्दस्तु देवी जगती . . । इति ।

अतिच्छन्दा **प्रचेतनप्रचेतय** (सा.६४२) ॥ १० ॥

तत्त्व० - देवच्छन्दांस्यभिधायासुरच्छन्दांस्याह -

**पञ्चदशाक्षरप्रभृतीन्येकावाञ्चि प्रत्यवरो-हीण्यसुरच्छन्दांसि** ॥ ११ ॥

इति । एकमक्षरमवाक् प्रातिलोम्येनाञ्चतीत्येकावाञ्चि । अत एव **प्रत्यवरोहीणि** । पञ्चदशाक्षरा गायत्री । चतुर्दशाक्षरोष्णिक् । इत्येवं प्रत्यवरोहन्तीति प्रत्यवरोहीणि । गतमन्यत् । तथा च शौनकः - **सप्त चैवासुराण्यपि** (ऋ.प्रा.१६.४) इति । **एकावमान्यासुराणां ततः पञ्चदशाक्षरात्** । (ऋ.प्रा.१६.६) इति ॥ ११ ॥

तत्त्व० - एवं सति जगत्यादेरक्षर परिमाणं दर्शयति -

**नवाक्षरा जगत्यष्टाक्षरैवातिच्छन्दाः** ॥ १२ ॥ इति । स्पष्टम् ॥ १२ ॥

5. $S^{2}$ संग्रहे for रत्ने ।
7. A छन्दस्तु देवीगायत्री त्रिष्टुप्छन्दस्तु भवति; $S^{1-2}$ त्रिष्टुप्छन्दस्तु जयतीति for त्रिष्टुप्छन्दस्तु ।
9. $S^{1-2}$ Om. विश्वान् देवान् काण्डऋषीन् ।
20. $S^{1}$ मान्या for मान्य ।

छन्दो० - पञ्चशा . . . अतिच्छन्दा इति। निगदेन व्याख्यातम्। श्रूयते च - **नवाक्षरमसुराणामवमं छन्द आसीत्। पञ्चदशाक्षरं परमम्** (तां.ब्रा.१२.१३.२७) इति। एतदुक्तं भवति। पञ्चदशाक्षरा असुराणां गायत्री। चतुर्दशाक्षरोष्णिक्। त्रयोदशाक्षरानुष्टुप्। द्वादशाक्षरा बृहती। एकादशाक्षरा पङ्क्तिः। दशाक्षरा त्रिष्टुप्। नवाक्षरा जगती। अष्टाक्षरातिच्छन्दाः इति। उदाहरणानि - गायत्री। **भगो न चित्रः** (सा.४४९)। उष्णिगनुष्टब्-बृहत्योऽन्वेषणीयाः। पङ्क्तिः। **इमं वृषणं कृणुतैकमिन्माम्** (सा.५९१)। त्रिष्टुप्। **सुमन्मा वस्वीरन्ती सूनरी** (सा.१६५४)। जगती द्रष्टव्या। अतिच्छन्दाः। **इन्द्रो विश्वस्य राजति** (सा.४५६) इति॥११-१२॥

**तत्त्व०** - एवं सति जगत्यादेरक्षरपरिमाणं दर्शयति -

**अथ प्रजापतेश्छन्दांसि। अष्टाक्षरप्रभृतीनि चतुरुत्तराण्यारोहीणि।**
**द्वाविंशदक्षरा जगती। षट्त्रिंशदक्षराऽतिच्छन्दाः॥१३॥**

**तत्त्व०** - स्पष्टम्। अत्र शौनकः -

**गायत्र्युष्णिगनुष्टुप् च बृहती च प्रजापतेः।**
**पङ्क्तिस्त्रिष्टुब् जगती च सप्त च्छन्दांसि तानि वै॥**
**अष्टाक्षरप्रभृतीनि** - (ऋ.प्रा.१६.१)
**चतुर्भूयः परस्परम्** (ऋ.प्रा.१६.२) इति॥१३॥

**छन्दो०** स्पष्टोऽर्थः। अष्टाक्षरा प्रजापतेर्गायत्री। द्वादशाक्षरोष्णिक्। षोडशाक्षरानुष्टुप्। विंशत्यक्षरा बृहती। चतुर्विंशत्यक्षरा पङ्क्तिः। अष्टाविंशत्यक्षरा त्रिष्टुप्। द्वात्रिंशदक्षरा जगती। षट्त्रिंशदक्षरा अतिच्छन्दा इति। उदाहरणानि। प्रजापतेर्गायत्री। **अदितेऽनुमन्यस्व** (खा.गृ.१.२.१७)। **अदितेऽनुमन्यस्व** (खा.गृ.१.२.१७) **सरस्वतेऽनुमन्यस्व**। (खा.गृ. १.२.१९) आदितेन्वादीनां प्रजापतेर्गायत्रीत्वं स्मृतिरत्ने उक्तम्।

तद्यथा - **अदितेऽन्वादिमन्त्रैस्तु चतुर्भिः परिवेष्टयेत्।**
**अदितेऽनुमन्यस्वेत्यस्य वामदेव ऋषिः स्मृतः॥**

6. A Om. उदाहरणानि।



**प्राजापत्या तु गायत्री सविता देवता स्मृता॥**
इति॥१३-१५॥

**तत्त्व०** - अथ ऋषिच्छन्दांस्याह -

**तेषां त्रयं त्रयःसमेत्यैकैकमृषिच्छन्दो भवति॥१४॥**

इति। **तेषां** देवासुरप्रजापतिच्छन्दसां त्रयं समेत्य समानजातीयमेकीभूयः एकैकमृषीणां छन्दो भवति। ततश्च दैवी गायत्र्यैकाक्षरा। असुरगायत्री पञ्चदशाक्षरा। प्रजापतिगायत्री अष्टाक्षरा। तासां मेलने चतुर्विंशत्यक्षरा गायत्री त्रिपदाष्टाक्षरापादा भवति। एवमुष्णिहाद्यतिच्छन्दः पर्यन्तेषु द्रष्टव्यानि ऋषिच्छन्दांसि। **गायत्री चतुर्विंशत्यक्षरा च** (ऋ.प्रा.१६.१६) इति शौनकोक्तेः॥१४॥

**छन्दो०** - तेषां देवासुरप्रजापतिच्छन्दसां समाननामधेयानां **त्रयं त्रयं समेत्य** एकधा भूत्वा **एकैकमृषिच्छन्दो भवती**त्यर्थः। यथा लोके समाजेषु समाशेषु समवायेषु चास्यताम् (द्र.पाम.१.१.५७) इत्युक्तेन चोच्यते स्वस्मिन्निति। तथापि स्वस्मिन्नेवास्यते। तद्वदिहापि **त्रयं त्रयं समेत्यै**तावत्युक्तेऽपि समाननामधेयानां त्रयं त्रयमिति सिध्यति। एतदुक्तं भवति देवानां गायत्र्य एकधा भूत्वा चतुर्विंशत्यक्षरा ऋषिगायत्री भवति। एवं तेषामुष्णिहः एकधा भूत्वा ऋष्युष्णिक् भवति। एवं तेषामनुष्टुभः। तेषां बृहत्यः, तेषां पङ्क्तयः, तेषां त्रिष्टुभः, तेषां जगत्यः एकधा भूत्वा ऋषिच्छन्दांसि भवन्ति। इति। शौनकेनाप्युक्तम् -

11. A एकैकऋक्तृचम् for एकैकम्।
11. A लोकेषु for लोके।
11. $S^1$ समावेशेषु for समाशेषु।
12. A समासेषु for समवायेषु।
12. $S^2$ च समश्यताम् for चास्यताम्।
14. A Om. एतदुक्तं भवति।
14. A गायत्र्यपि तथा for देवानां गायत्र्य एकधा भूत्वा।
16. $S^{1-2}$ after अनुष्टुभः add: अपि एकीभूत्वा ऋष्यनुष्टुप् भवति। तथा -
17. A Om. इति।

**तानि त्रीणि समागम्य सनामानि सनाम तत्।**
**एकं भवत्यृषिच्छन्दस्तथा गच्छन्ति संपदम्**॥ (ऋ.प्रा.१६.७)

इति। पिङ्गलनागेनाप्युक्तम् - **गायत्र्युष्णिगनुष्टुप्बृहतीपङ्क्तित्रिष्टुप्जगत्यः तिस्रः सनाम्न्यः एकैक आर्षेयः** (तु.पि.छ.सू.२.१५.१६) इति एकाक्षरादिन्यूनानामपि देवादिच्छन्दस्त्वमस्त्येव। अतस्तत्समूहात्मकत्वात् छन्दस्त्वं भवत्येव। उदाहरणानि। **अग्न आयाहि वीतये** (सा.१) इत्यादीनि प्रसिद्धानि। विधृत्यादीनाम् ऋषिच्छन्दस्त्वं नास्त्येव। तेषां देवादिसमूहासंभवात्। तथैवानन्तरश्लोके -

**सप्तवर्गं चकारैकमृषीणां यज्ञवोढवे**। (२.२.१६)

इति वक्ष्यति॥

नन्वत्र देवच्छन्द आदीनि चतुर्विधानि छन्दांसि वर्णितानि। यजुश्छन्दः प्रभृतीनि च चतुर्विधानि छन्दांसि भवन्ति। एतेषां लक्षणानि- **अथातश्छन्दसां विचयं व्याख्यास्यामः** (नि.सू.१.१.१) इत्यत्रास्माभिः प्रतिपादितानि। तेष्वष्टविधेषु छन्दःसु मध्ये **चतुर्विंशत्यक्षरा गायत्री**त्यादिभिरुक्तानां छन्दसाम् ऋषिच्छन्दसात् ऋषिगायत्रीछन्दः ऋष्युष्णिक्छन्द इति ब्राह्मणकल्पसूत्रप्रधानसूत्रफुल्लसूत्रोपग्रन्थनिदानसूत्रादिषु ऋषिच्छन्दस्त्वेन व्यवहारादर्शनात्। ब्राह्मणकल्पसूत्रादीनि तु **अथातश्छन्दसा**मित्यत्रास्माभिः प्रतिपादितानि। तस्मादृषीति विशेषणप्रतिपादनमकिञ्चित्करम्।

---

1. S[2] ०गत्य for ०गम्य।
1 S[1] सनामतः, A समानतः for सनाम तत्।
4. A after इति adds: ननु।
5. A Om. एकाक्षरादि . . . भवत्येव।
11. A विहितानि for वर्णितानि।
12. A Om. च।
12. S[1-2] after छन्दांसि ins. अपि।
16. S[2] Om. ०ब्राह्मण०
16. A सूत्रेषु for सूत्रादिषु।
17. A दर्शनात् for (अ)दर्शनात्।
18. A ऋषिरिति विशेषेण, S[2] ऋषिविशेष० for ऋषीति विशेषण०।



राड्गायत्र्यदीनां निचृद्गायत्र्यादीनां च ब्राह्मणादिषु प्रयोगदर्शनात् तल्लक्षणप्रतिपादनमप्यकिञ्चित्करं स्यादिति चेत्। उच्यते। ब्राह्मणादिषु प्रयोगदर्शनात् **गुणे त्वन्याय्यकल्पनाच्च** (जै.सू.१.३.१५) इति मीमांसान्यायेन ऋष्यादिविशेषणानां विकल्प इत्यवगन्तव्यम्। केवलगायत्र्यादिच्छन्दः प्रयोगापेक्षया ऋषिगायत्रीच्छन्दः राट्गायत्रीछन्दः निचृद्गायत्रीछन्दः इत्यादिप्रयोगे फलभूयस्त्वं भवति। व्याकरणसंस्कृतविशिष्टशब्दप्रयोगवत्। तथा हि - कमु कान्ताविति धातोः **कमेर्णिङ्** (पा.३.१.३०) इति णिङ्प्रत्ययान्तस्य लुङि **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** (पा.३.१.४८) इति चङादेशे कृते सन्वद्भावात् अभ्यासेत्वदीर्घयोर्णिलोपे च अचीकमत इति प्रयोगः। **आयादय आर्धधातुके वा** (पा.३.१.३१) इति णिङभावपक्षेऽपि **कमेश्चङ् वाच्यः** (पा.वा.३.१.४८) इति वार्तिककारवचनात्। चङि णिङभावात् सन्वद्भावाभावाच्च आकृतेषु सन्वत्कार्येषु अचकमतेति प्रयोगः। उभयोरेकार्थत्वेऽपि साधारणचङ्विध्यपेक्षिताचकमतेति प्रयोगापेक्षया असाधारणचङ्विध्युक्ते अचीकमतेति प्रयोगे फलभूयस्त्वं भवति। तदुक्तं महाभाष्ये - (पा.म.३.१.४८)

नाकमिष्ट सुखं यान्ति सुयुक्तैर्बडवारथैः।
अथ पत्काषिणो यान्ति येऽचीकमत भाषिणः॥इति॥ १४॥

**तत्त्व०** - तत्रोपष्टम्भकमाह -

---

1. S[2] विना for राड्।
1. A ब्राह्मणे for ब्राह्मणादिषु।
4. A विकल्पस्य for विकल्प इति।
5. A गायत्र्यादीनां for गायत्र्यादिच्छन्दः।
5. A Om. ऋषि०।
5. A Om. राड्गायत्रीच्छन्दः।
9. A द्वित्वे श्चुत्वे हलादिशेषे . . . भ्यासलोपे for सन्वदावात् अभ्यासे त्वदीर्घयोर्णिलोपे।
11. S[2] कमेमच्लेश्चङ्वक्तव्यः for कमेश्चङ्वाच्यः।
17. A सुयुतैर्विद्धसारसैः for सुयुक्तैर्बडवारथैः।
18. A अथापत्कार्षाणो यन्ति अचीकमत भाषणैः for अथ. . . भाषिणः।

तदेषश्लोकः -

***कास्वित् स्त्रियो द्व्यक्षरमेकविंशतिस्त्रिः सप्त भूत्वानु भवन्ति कर्मभिः।***
***पञ्चाशतः पञ्च नपुंसकानां द्वे चाधिके बिभ्रति त्र्यक्षराणाम् ॥ १७ ॥***

इति। तत्तद्ब्रह्मवादिभिरुदाहृतः **श्लोकः**। प्रमाणमिति शेषः। **कास्वित् स्त्रियः** स्त्रीलिङ्गा गायत्र्यादिशब्दवाच्या एकविंशतिसंख्याः । देवासुरप्रजापतिगायत्र्यादयः **कर्मभिः** हेतुभिः कर्मानुष्ठानायेति यावत्। **सप्त भूत्वानुभवन्ति**। अक्षरमिति जात्येकवचनम्। अक्षराणि प्राप्नुवन्तीत्यर्थः। भवतेः प्राप्तौ परस्मैपदं छान्दसम् । कत्यक्षराण्यनुभवन्तीत्यत्र आह - **नपुंसकानां** नपुंसकलिङ्गाक्षरशब्दवाच्यानामक्षराणां **पञ्चाशतः** पञ्चाशदुत्तरं द्विशतं द्वे अक्षरे अधिके द्विशतं पञ्चाशतं च **बिभ्रति**। दैवासुराणि त्रीणि छन्दांसि चतुर्विंशत्यक्षरादितयैकीभूय कर्मणि निर्वहन्तीत्याशयः ॥ १५ ॥

**छन्दो॰ - कास्वित् स्त्रियः** स्त्रीलिङ्गका देवासुरप्रजापतिगायत्र्युष्णिगनुष्टुप् बृहती पङ्क्तित्रिष्टुब्जगत्यः **एकविंशतिः** छन्दांसि (त्रिः) **सप्तभूत्वा** त्रिकरूपेण सप्तभूत्वा **कर्मभिः** यज्ञकर्महेतुभिः **द्व्यक्षरम्** ऋषिम् **अनुभवन्ति** ऋषिच्छन्दांसि भवन्तीत्यर्थः । किं च **त्र्यक्षराणां** तिसृषु देवासुरप्रजापतिगायत्र्यादिषु स्थितानि अक्षराणि येषां तानि तथोक्तानि। सप्तम्नुपमानपूर्वपदस्य बहुव्रीहिः। **वाच्यो वा चोत्तरपदलोपश्च** (पा.वा.२.२.२४) इति समासः। तद्विशिनष्टि - **नपुंसकानाम्** ऋषिच्छन्दसामित्यर्थ;। अतिच्छन्दःशब्दस्य स्त्रीलिङ्गत्वात्। अक्षराणीति शेषः। अक्षराणि तु **पञ्च पञ्चाशतः** पञ्चकृत्वः पञ्चाशतम्। **अधिके द्वे च** संख्या **बिभ्रति**। द्विपञ्चाशदुत्तरशतद्वयाक्षराणीत्यर्थः। अर्थतः सिद्धाक्षरगणनानुवादस्तु तत्तत्पूर्णच्छन्दोऽपेक्षया न्यूनाधिकत्वं क्रतुषु

---

2. A त्रिस्तप्त for त्रिःसप्त, S[1-2] Om. त्रिः॰।
12. A after स्त्रियः ins. चमरीदृशः।
16. A A देवासुर॰ . . . ॰गायत्र्यादिषु।
16. A तेषां for येषां।
21. A ॰द्वयानि for द्वयाक्षराणि।
22. S[1-2] (अ)पेक्ष for (अ)पेक्षया।



संपत्सिद्ध्यर्थमिति बोधयितुम्। संपत्सिद्धिस्तु यस्य कस्यचिदित्यादिना वक्ष्यते॥ १५॥

**तत्त्व॰** - तदिदमाह -

**देवासुराणां छन्दोभिरात्मनश्च प्रजापतिः।**
**सप्तवर्गं च कारैकमृषीणां यज्ञवोढवे ॥ १६ ॥**

इति। स्पष्टम्। तथा च शौनकः -

**तानि त्रीणि समागत्य सनामानि सनाम तत्।**
**एकं भवत्यृषिच्छन्दस्तथा गच्छन्ति संपदम्॥** (ऋ.प्रा.१६.७)

इति।

**एवं त्रिप्रकृतीन्याहुर्युक्तानि चतुरक्षरम्।**
**ऋषिच्छन्दांसि** (ऋ.प्रा.१६.९)
**तैः प्रायो मन्त्रः श्लोकश्च वर्तते।** (ऋ.प्रा.१६.९) इति ॥ १६ ॥

**छन्दो॰** - कर्मार्थसप्तवर्गं प्रजापतिरेव कृतवानिति श्लोकेनैकेनाह - **देवासुराणामिति**। **ऋषीणाम्** ऋषिच्छन्दसां **सप्तवर्गं यज्ञवोढवे** यज्ञं वोढुम्। वह प्रापण इति धातोस्तुमर्थे तवेङ्प्रत्ययः। शिष्टं स्पष्टम्। अत्र देवादिच्छन्दसां चतुर्विंशत्यक्षरा गायत्रीत्यादिऋषिच्छन्दोभ्यः पूर्वमेव लक्षणे वक्तव्ये लक्षणकरणमृषिच्छन्दोभिर्विना स्वतन्त्रेणापि प्रवृत्तिरस्तीति ज्ञापयितुम् ॥१६॥

**तत्त्व॰** - प्रसङ्गादाह -

**यस्यकस्यच्छिन्दसः संपदं कश्चिदिच्छति।**
**चतुर्थं तस्य संख्याय तावतीराहरेदृचः ॥ १७ ॥**
**यदि तच्छन्द आहरेदन्यदन्यस्य संपदे।**
**चतुर्थं तस्य संख्याय विद्यात्तास्तावतीर्ऋचः ॥ १८ ॥**

इति। **यस्यकस्यचिच्छन्दसः**। क्षुद्रकल्पे यज्ञविभ्रष्टप्रायश्चित्तविधाने - यज्ञविभ्रष्टस्य श्रायन्तीयं ब्रह्मसाम वयमु त्वामपूर्व्य (सा.४०८) इति। समानमितरं ज्योतिष्टोमेन। तस्य संपत्। सप्तदशाष्टादशाक्षराणि श्रायन्तीयादतिरिच्यन्ते। तावत्कालेयाल्लुप्यन्ते तत्संपन्नम्

---

1. S[1] before इति ins. च।

(क्षु.सू.१.४.११-१२) इत्यादौ प्रकृतस्य नौधसस्य निर्वर्त्तिकायाः **तं वो दस्मम्** (सा. २३९) इत्यस्याः **संपदं कश्चित्** कल्पकार **इच्छति**। यैरुक्तैः छन्दोभिर्माध्यंदिनैः स्तुत्वा तानि त्रिष्टुभमभिसंपद्यन्ते शास्त्रविहित-त्रिष्टुप्संपत्सिद्धये। तदर्थं **तस्य** प्रकृतस्य बृहतीच्छन्दस**श्चतुर्थं** पादमियत्पादा इयदक्षरा इति **संख्याय** पादान् सम्यक् परिगणय्य श्रायन्तीयानुष्ठानेन - **प्रतिभागं न दीधिमः** (सा.२६७) इत्यादेरभ्यस्तस्य चतुर्थपादस्य अक्षरसंख्यया षट्त्रिंशदधिकशताक्षराणामाधिक्यात् स्तोत्रान्तरे यावदक्षराया ऋच आहरणे प्राकृती त्रिष्टुप् संपत्सिध्यति **तावतीराहरेदृचः**। **वयमुत्वाम्** (सा.४०८) इति। ककुभ **आहरेदाहरिष्यति यदि तच्छन्दः**। **वयमुत्वाम्** इति ककुभ आहरेदन्यत्। **तरोभिर्वो विदद्वसुम्** (सा.२३७) इत्यादिऋग्जात**मन्यस्य** श्रयन्तीयं ब्रह्मसाम निमित्तरहितस्य क्रतोः **संपदे** संपत्सिद्धये भवति। **तस्य** नैमित्तिकस्य श्रायन्तीयादे**श्चतुर्थं** सप्तदशावृत्त्याभ्यस्तं पदं **संख्याय** परिगणय्याहृतास्ताः **वमु त्वाम्** (सा.४०८) इति ककुभ**स्तावती ऋचः**। **तरोभिर्वो विदद्वसुम्** (सा.२३७) इत्याद्या ऋचः इति विद्यात्। नैमित्तिकाधिक्ये इदमुदाहरणम्। नैमित्तिकन्यूनतायामपीदं यथायोग्यं योजनीयम् इति ॥ १७ ॥

इति (श्रीतातप्रसादविरचितायां तत्त्वसुबोधिन्यां) निदानवृत्तौ द्वितीये पटले द्वितीयः खण्डः ॥ २ ॥

**छन्दो॰** अथ क्षुद्रकल्पसूत्रोक्तक्रतुषूनाक्षरच्छन्दःपूर्त्तिं श्लोकाभ्यामाह - **यस्य कस्यचिदिति**। गायत्र्यादिच्छन्दसां मध्ये **यस्य कस्यचित्** प्रकृतिक्रतुच्छन्दोऽपेक्षया न्यूनाधिकाक्षरस्य विकृतिक्रतुच्छन्दसः **संपदम्** उक्ताक्षरसंख्याम्। संपच्छब्दः संख्यावाची। अथ **संपत्सिद्धिरनादेशे**। **चतुष्टोमस्तोमसंपदतिरेकात्** (   ) इत्यादौ प्रसिद्धत्वात्। कश्चित्

20. A Om. यस्य।
21. A Om. ॰छन्दो।
21. A छन्दसंपदं for विकृतिक्रतुच्छन्दसः संपदं।
22. A संख्यापूर्तिं for उक्ताक्षरसंख्याम्।
23. $S^{2}$ Om. आदौ।



क्रतुविधिकृत् **इच्छति** इति। कल्पसूत्रकारादिरिच्छति। इच्छेद्यदि तदा **तस्य** छन्दस**श्चतुर्थं** पादमित्यर्थः। तत् **संख्याय** तत्रत्यमक्षरं गणयित्वा अक्षरवृत्त्यर्थं **तावतीः** अक्षरसंख्या अन्यस्या अधिकाक्षराया **ऋचः** सकाशादाहरेत्। यावद्भिरक्षरैः संख्यापूर्तिर्भवेत् तावन्त्यक्षराणि ऋगन्तरस्थानि गणयेदित्यर्थः। उदाहरणानि तु ब्राह्मणे - **योनिर्वै यज्ञायज्ञीयम्। एतस्माद्वै योनेः प्रजापतिर्यज्ञमसृजत। तस्माद्यज्ञायज्ञीयम्। तस्माद्वा एतेन पुरा ब्राह्मणा बहिष्पवमानमस्तौषत। योनेर्यज्ञं प्रतनावामहा** (तां.ब्रा.८.६.३-४) इति ब्राह्मणे योनेर्यज्ञं श्रूयते। मिमं योनेर्यज्ञमेकाध्याये कल्पकारः कल्पयति। **योनेर्यज्ञं तन्वानस्य यज्ञायज्ञीयं बहिष्पवमानम्। ससुन्वेयो वसुनामुपशिक्षापतस्थुष इति सफपौष्कले यज्ञायज्ञीयस्यर्क्षु गायत्रमग्निष्टोमसाम। समानमितरं ज्योतिष्टोमेन। तस्य संपत्षडक्षराणि बहिष्पवमानादतिरिच्यन्ते। तावदुष्णिक्ककुभ्यां लुप्यन्ते। तत्संपन्नम्** (क्षु.क.१.४.१४-१५) इति संपदप्युक्ता। तत्र उप-दवि-पवेति यज्ञायज्ञीयानामक्षरसंख्यागणनात् प्राकृतबहिष्पवमानापेक्षया षडक्षराणि बहिष्पवमानादतिरिच्यन्ते। **ससुन्वेयो** वसूनामित्यूनाक्षरायाः ककुभः प्राकृतककुप्सफापेक्षया चत्वार्यक्षराणि ह्रसन्ते। **उपशिक्षेति** पौष्कलस्य प्राकृतेन्द्र**मच्छ**पौष्कलापेक्षया द्वे अक्षरे ह्रसेते।

1. A ॰विधिः for ॰विधिकृत्।
1. A Om. इति for इच्छेद्यदि।
2. A Om. छन्दसः।
2. A Om. तत् संख्याय . . . गणयेदित्यर्थः।
5. $S^{1-2}$ योनेर्यज्ञादौ। तथाहि for ब्राह्मणे . . . अस्तौषत।
9. $S^{1-2}$ कल्पयता क्षुद्रकल्पसूत्र ($S^{2}$ Om. ॰सूत्र॰) कृता for कल्पकारः कल्पयति।
9. A before योनेः adds : तद्धि गेहं।
11. A विहिते। तत्र तस्य संपदित्यादिना for यज्ञायज्ञीयस्युर्क्षुः . . . संपन्नमिति।
14. A Om. तत्र उप-दवि-पवेति।
15. A प्रकृत for प्राकृत।
16. $S^{1-2}$ प्रकृति for प्राकृत।
16. A Om. ॰सफ॰।
17. A उष्णिहः for पौष्कलस्य।
17. A Om. ॰इन्द्रमच्छपौष्कल॰।

आहत्य षडक्षराणि ह्रसन्ते। बहिष्पवमानादतिरिक्तैः षडक्षरैः संपत्सिद्धा भवति। उदाहरणान्तराण्यपि - त्रैशोकं ज्योगामयाविने ब्रह्मसाम कुर्यात् । वषट्कारणिधनमभिचरणीयस्य ब्रह्मसाम कुर्यात्। श्रायन्तीयं यज्ञविभ्रष्टाय ब्रह्मसाम कुर्यात् । इत्यादिब्राह्मणोक्त ज्योगामयावियज्ञाभिचरणीय-यज्ञविभ्रष्टयज्ञादयः क्षुद्रकल्पसूत्रे **ज्योगामयाविनः आनो मित्रावरुण** (क्षु.क.१.२.१) इत्यादिभिः क्लृप्तेष्वपि द्रष्टव्यानि॥ १७॥

अथ **गायत्रीषु ब्रह्मवर्चसकामायोक्थानि प्रणयेयुर्गायत्र्यां ब्रह्मसामानुष्टुभ्यच्छावाकसाम । सैषा गायत्री संपद्यते** (तां.ब्रा.८.१०.१) इत्यादिब्राह्मणोक्तब्रह्मवर्चसकामादयः उक्थान्ताः पञ्च काम्यप्रयोगाः श्रूयन्ते। तेषूक्थ्येषु अनुष्टुबादयो गायत्र्यादयो भवन्ति। तत्र गायत्र्यादिच्छन्दः संपादनार्थम् ऋगेकदेशस्य ऋक्त्वं च श्लोकेनाह - **यदि तच्छन्द** इति । तच्छन्दः प्रकृतस्वाभाविकछन्दः उक्थप्रथमस्य मैत्रावरुणसाम्नः गायत्रीछन्दः उक्थद्वितीयस्य ब्रह्मसाम्नः ककुप्छन्दः उक्थतृतीयस्याच्छावाकसाम्नः अनुष्टुप्छन्दः तत्र ब्रह्माच्छावाकसामच्छन्दः अन्यच्छन्दः गायत्र्यादिच्छन्दः **आहरेद्यदि** प्राप्नुयाद्यदि तदा **अन्यस्य** गायत्र्यादेः **संपदे** सिद्धये **तस्य** स्वाभाविकच्छन्दस**श्चतुर्थं** पादमित्यर्थः।

---

1. A सन्ति for ह्रसन्ते।
2. A इदमप्युदाहरणमद्यापि for उदाहरणान्तराण्यपि।
4. A ०संज्ञाभि० for ०यज्ञाभि०।
9. A Om. उकृथान्ताः।
10. S[1-2] Om. काम्यप्रयोगाः।
10. A Om. श्रूयन्ते।
10. A कल्पसूत्रे ब्रह्मवर्चसकामस्येत्यादिना कॢप्तास्तेष्वनुष्टुभ इति कल्पसूत्रं विश्वरूपाज्योतिर्गानादीनामपि छन्दोऽन्तरं विधीयते । तत्र सर्वानुष्टभादीनां गायत्र्यादिसंपत्तिः कथम् ऋगेकदेशस्य संख्याय विद्यात्तावतीर्ऋच इति उत अपि च ब्राह्मणादि अन्यस्यानुष्टुभादेरन्त्यं तद्गायत्र्यादिच्छन्दः for तेषूक्थेषु . . . गायत्र्यादिच्छन्दः।
15. A गृह्णीयात् for प्राप्नुयात्।
15. A तस्यान्यसंपदे for अन्यस्य गायत्र्यादेः संपदे।
16. A अनुष्टुबादेः for स्वाभाविकच्छन्दसः।



जातावेकवचनम्। तान् पादान् **संख्याय** अक्षरशो गणयित्वा यावद्भिः पादैः पादैकदेशेन वा गायत्र्यादिच्छन्दो भवेत् **तावतीः ता ऋच** इति **विद्यात्** जानीयात् । अन्यच्छन्दः सिध्यतीति भावः । उदाहरणानि तु ब्रह्मवर्चसकामयागादौ । तस्य क्षुद्रकल्पसूत्रकारेण **ब्रह्मवर्चसकामस्ये** (१.५.८)त्यादिना क्लृप्तिरुक्ता। तत्र उक्थेषु **एवाह्यसि वीरयुः** (सा.८२४) इति गायत्रीषु साकमश्वसौभरे। **इन्द्रं विश्वा अवीवृधन्नित्या**(सा.८२७)-द्यनुष्टुभि नार्मेधं विहितम्। तत्र अनुष्टुप्नार्मेधतृचस्य द्वादशानां पादानां त्रिभिस्त्रिभिः पादैरेकैका गीतिऋक् । ताः संभूय चतस्रो भवन्ति । साकमश्वसौभरयोः स्वभावतः षड्चः संभूय दश ऋचो भवन्ति। सामावस्थायां सप्ततिः ऋचो भवन्ति । एकविंशस्तोमत्वादुकृथानाम् । तस्मादृक्त्वादेव क्षुद्रकल्पोक्ता दश अस्तूयमाना गायत्र्यः सप्ततिः स्तूयमाना इत्येतदुपपद्यते। **गानं तु अनुष्टुभ्येव**। **गानं तु अनुष्टुभि** इति श्रवणात्। एवं पशुकामादिषु उष्णिगादयोऽपि द्रष्टव्याः। तथा अश्वमेधे **तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति** (तां.२१.४.५) इति श्रूयते। तत्र **पवस्व वाजसातये** (सा.१०१६) **इति तिस्रोऽनुष्टुभः** (आ.क.६.६.a) इति कल्पः। तान्युदाहरणानि। तद्यथा **पवस्व वाजसातये** (सा.१०१६-१८) इति तिसृणामनुष्टुभां द्वादशपादानां क्रमेण त्रयस्त्रयः पादा एका ऋक्। आहत्य चतस्र ऋचो भवन्ति। ऋक्त्वादेव चतस्रो गायत्र्योऽपि भवन्ति। अत्र गानमपि गायत्रीष्वेव। तद्यथा - **पवस्व वाजसातयोम्**। **देवेभ्यो मधुमत्तरोम्**। **वत्सं जातं न मातरोम्**। **पृथिवीं चातिजभ्रिषोम्**। एवं गौतमचतुष्टोमयोः प्रथमेऽपि **अयं पूषा रयिर्भग** इति

---

1. S[1-2] Om. तान्।
1. A Om. पादान्।
1. A यावतीभिः for यावद्भिः।
1. A Om. पादैः पादैकदेशेन वा।
7. A इत्युक्थानि for विहितम्।
8. A नार्मेधात्री (…)क्षराणि गायत्रयतिरिक्तानि सैका गायत्री संपद्यते। अतः गायत्र्यः संपद्यन्ते। एवमश्वमेधे च for अनुष्टुप्नार्मेधतृचस्य . . . तद्यथा।
10. A उक्थ्यात् for ऋक्त्वात्।
15. A See ln. no. 8 above.
16. S[1-2] त्रयः for त्रयस्त्रयः।
17. A Om. ऋक्त्वादेव . . . गानम्।

तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोतीत्यत्रापि गायत्रीष्वेव गानम् । **नमः सखिभ्यः पूर्वसद्भ्यः** (सा.१८२८-३०) इति तृचात् द्वितीयऋचः पादत्रयं, तृतीयऋचः द्वितीयतृतीयपादौ च आहत्य पञ्च पादान् गृहीत्वा विश्वरूपागाने **एतस्यां पङ्क्तौ** (द्रा.श्रौ २.४.११) इति द्राह्यायणोक्तमप्युदाहरणम् । ज्योतिर्गानस्यापि **अग्निर्ज्योतिरिति** त्रिपदैका गायत्री स्वाभाविकी । तस्या **एतेषु पदेषु त्रिस्त्रिरेकैकमभ्यासं मनसा गायत्रं गायेत्** (द्रा.श्रौ. २.४.२१) इति वचनात् । पादानामृगेकदेशत्वेऽपि त्रिरभ्यस्यमानेऽप्येकैकस्मिन् पादे गायत्रं भवति । तस्मात् **ऋच्यध्यूढं साम गीयते** (छां.उ.१.६.१) इति छान्दोग्ये दर्शनात् । **एकं साम तृचे क्रियते** इति श्रुतेश्च प्रत्येकं शक्तिः । तस्मात् तिस्रो गायत्र्य एकतृचो भवन्ति । **अतस्तृचापत्तीनि तृचेषु** (द्रा.श्रौ. २.१.२) इति सकृद्गानमुपपद्यते । अत्र **मनसा गायत्रं गायेदि**त्यस्य गायत्रं त्रिरुक्तं गायेदिति धन्विना व्याख्यातम् । **अनिरुक्तं गायेत्** इति सामान्यश्रुतेश्चयनोपस्थाने **अग्न आयूंषि** (सा.६२७) **इति प्रत्यङ्ङुखस्तिष्ठन् शिरसि गायत्रं गायेन्निरुक्तम्** (ला.श्रौ. १.५.११) इतिवत् । अत्राप्यपवादाभावात् वरदराजाद्युक्तमपि गानं तृचसंपादनार्थमिति भवति । सामश्रौतिनः प्रष्टव्याः । एवमाद्युदाहरणानि द्रष्टव्यानि । शौनकोऽप्याह-

> **छन्दस्तुरीयेण समानसंख्या**
> **याश्छन्दसोऽन्यस्य भवन्त्यृचोऽन्याः ।**
> **यावत्तुरीयं भवति स्वमासां**
> **तावत्य एता इतरा भवन्ति ॥** (ऋ.प्रा.१८.४५) इति ॥ १८॥

इति तञ्जावूरू - ग्रामनिवासिना श्रीपेत्ताशास्त्र्यपराभिधानेन हृषीकेशशर्मणा विरचितायां छन्दोविचितिवृत्तौ द्वितीये पटले द्वितीयः खण्डः ॥ २ ॥

2. A ऋक्पाद० for ऋचः पाद० ।
2. A ऋग्द्वितीय० for ऋचः द्वितीय० ।
4. A अपि for इति ।
5. A after गायत्री ins. इति तिस्रो गायत्र्यो भवन्ति ।
9. $S^{1}$ ऋक्त्वं, $S^{2}$ उक्तं for शक्तिः ।
10. $S^{1}$ एकश्च, $S^{2}$ एकर्चस् for एक० ।
11. $S^{1-2}$ Om. अत्र मनसा . . . प्रष्टव्याः ।
16. $S^{1-2}$ शौनकेनाप्युक्तम् for शौनकोऽप्याह ।

# तृतीयखण्डः

तत्त्व० - अथ प्रसङ्गादृचां पादेयत्तानुसारेणाध्ययनेऽवसाननियमं विधत्ते -

**अथावसानानि ॥ १ ॥**

इति व्याख्यास्याम इति शेषः ॥ १ ॥

**एकपदाद्विपदानामन्ततोऽवसानम् ॥ २ ॥**

तत्त्व० - इति । एकपदद्विपदानामृचां यावदृचमधिकृत्यान्ततोऽवस्येत् । यथा - **इन्द्रो विश्वस्य राजति** (सा.४५६) । **परि प्र धन्व** (सा.४२७) इति ॥ २ ॥

**छन्दो०** - छन्दःपरिज्ञानस्य ऋक्पादज्ञानाधीनत्वात् अवसानप्रदर्शनव्याजेन ऋक्स्वरूपं तत्पादस्वरूपं चाह - **अथा . . . अवसानम्** इति । ऋगध्ययन इति शेषः । **अन्तत** इत्याद्यादित्वात् सप्तम्यर्थे तसिल् प्रत्ययः । एकः पादो द्वौ वा पादौ यासामृचां तास्तथोक्ताः । **टाबृचि** (पा.४.१.९) इति टाप्प्रत्ययः । **पादः पद्** (पा.६.४.१३०) इति पदादेशः । एवं सर्वत्र ज्ञेयम् । एकपदानां द्विपदानां च ऋचाम् ऋगध्ययनकाले ऋचः अवसानं भवति । एकपदा - **इन्द्रो विश्वस्य राजति** (सा.४५६) **सुमन्मा वस्वीरन्ति सूनरी** (सा.१६५४)। द्विपदा - **विश्वतो दावन्** (सा. ४३७) इत्यादयः । **इन्द्रो विश्वस्ये**त्यतः प्राच्याः **अग्न आयाहि** (सा.१) इति पादद्वयं न ऋक् । तन्मात्रे सामाध्ययनाभावात् ॥ १-२ ॥

2. $PS^{2}$ यत्ना० for (इ)यत्ता० ।
5. $S^{1-2}P$ एकपद for एकपदा ।
9. $S^{2}$ अध्ययनम् for अध्ययने ।
13. A ऋगन्तः for ऋचः ।
16. A Om. न ।

**त्रिपदाप्रभृतीनां द्वावुक्त्वा शेषमाह षट्पदाभ्य इति ॥ ३ ॥**

**तत्त्व०** - इति। **त्रिपदाप्रभृतीनां** त्रिविधानामादितो **द्वावुक्त्वा** विरम्य **शेषं** पदजातमाह ब्रूयादित्यर्थः। उदाहरणम् - **अग्न आ याहि वीतये** (सा.१)। **यज्ञायज्ञा वो अग्नये** (सा.३५)। **स्वादोरित्था विषूवतः** (सा.४०९) इति॥ ३॥

**छन्दो०** - **त्रिपदाप्रभृतीनां** षट्पदाभ्यः प्राचीनानामृचां द्वौ पादौ **उक्त्वा** पठित्वा विरम्य **शेषं** पादमाह अधीते। अत्र **आहेति** वर्तमानप्रयोगात् तथैवाध्येता प्रकृतिऋचः उत्तरा ऋचश्च इदानीमप्यधीत इत्यर्थः। त्रिपदा - **अग्न आयाहि वीतये** (सा.१)। चतुष्पदा - **यज्ञायज्ञावो अग्नये** (सा.३५)। **गायन्ति त्वा गायत्रिणः** (सा.३४२)। पञ्चपदा - **स्वादोरित्थाविषूवतः** (सा.४०९)॥ ३॥

**तत्त्व०** - अमुमुत्सर्गं त्रिपदायां क्वचिदपवादयति -

**भवति तत्र त्रिपदायामन्ततोऽवसानम् दुहीयन्मित्रधितये इति ॥ ४ ॥**

त्रिपदासु मध्ये - **दुहीयन्मित्रधितये**। इति। त्रिपदायामन्ततोऽवसानं **भवति**। न मध्ये। यथा - **दुहीयन्मित्रधितये युवाकु राये च नो मिमीतं वाजवत्यै। इषे च नो मिमीतं धेनुमत्यै** (ऋ.१.१२०.९) इति॥ ४॥

**छन्दो०** - क्वचिदपवादमाह - **तत्र त्रिपदायामिति**। यथेति त्रिपदायामृचि विरामद्वये प्राप्ते दुहियन्मित्रे तस्यां त्रिपदायाम् ऋगन्त **एवावसानं भवति**। - दुहियान्मित्रेति बाह्वृच्ये (१.१२०.९)॥ ४॥

**यथा चतुष्पदायां त्रिषु**

**आ नो वयोवयः शयम्** (सा. ३५३) ॥ ५ ॥

---

1. AS[1-2] Om. इति and trans. भवति from the following sutra.
8. S[-2] प्रकृत्युत्तरा ऋचः, A प्रकृतिऋक् उत्तरऋक् for प्रकृतिऋचः उत्तरऋचः।
13. AS[2] म see footnote 6.
17. A Om. यथेति . . . बाह्वृच्ये, from the commentary, it is evident, that this sutra, according to छ.वि.वृ. extends upto यथा of the following.
20. A सव्ये चतुष्पदा गायत्रेषु for यथा चतुष्पदायां त्रिषु।
20. S[2] after चतुष्पदायां adds : तथा।



**तत्त्व०** - चतुष्पदायाम् ऋचि त्रिषु पादेषु विरम्य अनन्तरम् - **उग्रं वचो अपावधीः** इति चतुष्पादं ब्रूयात्॥ ५॥

**छन्दो०** - **चतुष्पदायामृचि त्रिषु** वा पादेषु उक्तेषु सत्सु विरम्य चतुर्थपादमुक्त्वा विरमेत्। स्वयमेवोदाहरति - **आ नो वयोवयः शयम्** (सा.३५३) इति॥ २॥

**तथा पञ्चपदायाम् ॥ यन्मे यमम् इति ॥ ६ ॥**

**तत्त्व०** - यन्मे यमम् इति पञ्चपदायां तथा त्रिषु त्रिषु पादेषु विरम्य पश्चात् **जीवातवे न मृत्यवे** (ऋ.वे.१०.६०.९) इत्यादि ब्रूयात्॥ ६॥

**छन्दो०** - पञ्चपादायां त्रिषु पादेषु उक्तेषु सत्सु विरम्य पश्चात् पादद्वयम् उक्त्वा विरमेत्। उदाहरति - **यन्मे यमम्** इति। एतद्ब्राह्मणे। इदमुपलक्षणम् अन्यत्रापि दर्शनात्। यथा **अधाह्यग्नेः**। **एभिर्नो अर्कैः** (सा.१७७८-९)॥६॥

**अथापि चतुष्पदेषु। अग्ने तमद्य (सा.४३४) इति ॥ ७ ॥**

**तत्त्व०** - अथापि पञ्चपदान्तरे **अग्ने तमद्य** (सा.४३४) इत्यत्र चतुष्पादेषु विरम्य, अथ **ऋध्यामा त ओहैः** (सा.४३४) इत्येव ब्रूयात्॥ ७॥

**छन्दो०** - **अग्ने तमद्ये**त्यस्यां पञ्च पदायां चतुर्षु पादेषु उक्तेषु विरम्य पञ्चमपादे विरामः॥ ७॥

**अथापि द्वौ द्वावथैकम्। अभि न इळा यूथस्य माता (ऋ.५.४१.१९) इति ॥८॥**

**तत्त्व०** - अथापि पञ्चपदान्तरे **अभि न इळा यूथस्य माता** इत्यत्र **द्वौ द्वौ** पादावुक्त्वा विरम्य पुनर्द्वौ पादावुक्त्वाऽथैकं पादं ब्रूयात्। पाठस्तु -

**अभि न इळा यूथस्य माता स्मन्नदीरुर्वशी वा गृणातु।**
**उर्वशी वा बृहाद्दिवा गृणानाभ्पूर्णाना प्रभृथस्यायोः॥**
**सिषक्तु न ऊर्जव्यस्य पुष्टेः** (ऋ.५.४१.१९)॥ इति॥ ८॥

---

3. A चतुष्पदा गायत्रेषु for यथा चतुष्पदायां त्रिषु।
9. A ऊह्येषु for उक्तेषु।

छन्दो० - निगदेन व्याख्यातम्। अभिनेत्येतदुदाहरणमृग्वेदे ॥ ८ ॥

**अथापि द्वावुक्त्वाथैकमथ द्वौ। तवत्यन्नर्यन्नृतः इति ॥ ९ ॥**

**तत्त्व० - अथापि** पञ्च पदान्तरे **तवत्यन्नर्यं नृतः** (सा.४६६) इत्यत्र **द्वौ** पादावधीत्य **अथैकं पादमुक्त्वा** अथ **द्वौ** पादौ ब्रूयात् ॥ ९ ॥

छन्दो० - स्पष्टोऽर्थः ॥ ९ ॥

**षट्पदायां द्वयोर्द्वयोरवसानम्।**

**उभे यदिन्द्र रोदसी** (सा.३७९) इति ॥ २० ॥

तत्त्व० - स्पष्टम् ॥ १० ॥

**अथापि त्रिषु। अपि वृश्च पुराणवत्।** (ऋ.८.४०.६) **इति ॥११॥**

छन्दो० - सूत्रद्वयमपि स्पष्टम् ॥ **अपि वृश्चे**ति ऋग्वेदे ॥ १० - ११ ॥

**सप्तपदायां त्रीनुक्त्वा द्वौ द्वौ परौ अग्नि होतारं मन्ये दास्वन्तम्।** (सा. ४६५) इति ॥ १२ ॥

**तत्त्व० - सप्तपदायामृचि त्रीन्** पादा**नुक्त्वा** विरम्य पश्चात् चतुरः पादान् **द्वौ द्वौ** ब्रूयात्। उदाहरणम् - **अग्निं होतारम्** इति ॥ १२ ॥

छन्दो० - **सप्तपदायामृचि** त्रीन् पादा**नुक्त्वा** विरम्यानन्तरं पादद्वयमुक्त्वा विरमेत्। स्वयमेवोदाहरति - **अग्निं होतेति**। इदमपि - **अस्तु श्रौषट् पुरो अग्निं धिया दधे** (सा.४६१) ॥ १२ ॥

**अथापि द्वौ द्वावथ त्रीन्। प्रो ष्वस्मै पुरोरथम्** (सा.१८०१) इति ॥ १३ ॥

**तत्त्व० - अथापि** सप्तपदान्तरे **प्रोष्वस्मै** इत्यत्र **द्वौ द्वौ** पादावुक्त्वा, **अथ त्रीन्** पादान् ब्रूयात् ॥ १३ ॥

छन्दो० - स्पष्टम्। उदाहरति - **प्रोष्वस्मै पुरोरथम्** (सा.१.८०१) इति तृचः। शौनकेनापि अवसानमुक्तम्।

**द्वाभ्यामवस्येत् त्रिपदासु पूर्वं पादेन पश्चात् क्वचिदन्यथैतत्।**
**मध्येऽवसानं तु चतुष्पदासु त्रिभिः समस्तैरपरैः परैर्वा ॥**



**पङ्क्तया द्विशो वा तत उत्तरेण त्रिभिस्तु पूर्वं विपरीतमेतत्।**
**द्विशस्त्रिशो वा पुरतश्चतुर्भिः स्यात्षट्पदानामवसानमेतत्।**
**त्रिभिस्तु पूर्वं तत उत्तरं स्यात् द्विशस्त्रिशो वा यदि वा समस्तम् ॥**
**द्वाभ्यां परं सप्तपदावसानं द्वाभ्यां तु मध्येऽष्टपदासु विद्यात् ॥**

(ऋ.प्रा. १८.४६-५२) इति ॥ १३ ॥

**अष्टापदाप्रभृतीनां न प्रज्ञातमवसानं विद्यते ॥ १४ ॥**

**तत्त्व० - स एष समासः। आष्टपदतायाः क्रमते** (नि.सू.१.४) इत्युक्ताष्टापदानामृचां (**प्रज्ञा**) **तमवसानं नियतं न विद्यते** ॥ १४ ॥

**तत्त्व०** - अथ तर्हि यत्र क्वाप्यनियमेनावसितव्यम्। नेत्याह -

**तत्र मध्य एव पादस्य नावस्येत ॥ १५ ॥**

**तत्र मध्य एव पादस्य** पदस्य **नावस्येत्** अवसानं न कुर्यात् ॥

**छन्दो० - अष्टापदा . . . नावस्येत्** इति। अष्टौ पादा यस्या ऋचः सा अष्टपदा। तत्प्रभृतीनामष्टपदानवपदादीनाम् ऋचां **प्रज्ञातमवसानं न विद्यते**। किंतु - पदशब्दः पादवचनः। **पादस्य मध्ये नावस्येत्** न विरमेत् ॥ १५ ॥

**तत्त्व०** - ननु पदान्ते यत्र क्वाप्यवसानं स्यादित्यतिप्रसङ्गमाशङ्क्याह -

**अर्थाभिप्रापणान्न्यूनीभावोऽर्थाभिप्रापणादतिरेकः ॥ १६ ॥**

अर्थाभिप्रापणं वाक्यार्थावगतिः। ल्यब्लोपे पञ्चमी। वाक्यावगतिमपेक्ष्य न्यूनीभावम् (वः) अवसानस्य शैघ्र्य**मतिरेकः** दैर्घ्यं च भवति ॥ १६ ॥

**छन्दो०** - पादानां न्यूनतायामतिरेके च नियामकमाह - **अर्थाभीति**। स्पष्टोऽर्थः। तथा च मीमांसासूत्रम् - **तेषामृग्यत्रार्थवशेन पादव्यवस्था** (जै.सू.२.१.३५) इति ॥ १६ ॥

**तत्त्व०** - ननु गायत्र्यादिषु तासां पादेषु च तत्र तत्रोक्त - परिमाणान्न्यूनता दृश्यते। ततः कुत इत्यत आह -

---

1. S[1] पङ्क्तचां for पङ्क्तचा।
4. S[2] न for तु।
11. S[1] बा for न।
13. S[1] Om. न।

**अथ यत्रैतदक्षरमागच्छति नामिति वामिति वा तदुतोनीकरोति** ॥१७॥

अथ - शब्दो न्यूनीभावप्रारम्भार्थः। यत्र पादावसानेषु **एतदक्षरम् नामिति वामिति आगच्छति**। **इत्य**वधारणार्थः। तत्र त**त्रोनीकरोत्ये**व पादम्। यथा **नभन्तामन्यकेषाम्** (सा.१८०१) इति॥ १७॥

**तत्त्व०** - न्यूनीभावहेतून् संधीन् तदभावेऽन्यूनतां च दर्शयति।

**एकाक्षरभाविनो वा संधयः** ॥ १८॥

इति। एकाक्षरं भवितुं शीलमेषामिति एकाक्षरभाविनः। संध्यक्षराणि खलु द्वे द्वे अक्षरे एकमक्षरं भूत्वा वर्तन्ते। अतः छन्दस्यक्षरलोपो विकर्षे तु न लोपः इति भावः॥ १८॥

**छन्दो०** - ऊनीभावे निमित्तान्तरमप्याह - अथ **संधय** इति। **अथ यत्र** ऋक्षु **नामित्येतदक्षरमामित्येतदक्षरं वा** अध्ययने **आगच्छति** तत् नाम आं वा। **उत** अप्यर्थे। तदपि पादान् **ऊनीकरोति**। यद्वा **एकाक्षरीभाविनः संधयो वा** विकल्पेन ऊनीकुर्वन्ति॥ १७ - १८॥

**तत्त्व०** - तत्रोपष्टम्भकप्रमाणं दर्शयति -

**तदप्येतौ श्लोकौ भवतः -**
**चत्वारि संधिजातानि यैश्छन्दो ह्रसते न च।**
**प्रश्लिष्टमभिनिहितं क्षिप्रसंधिरभिध्रुवम्॥**
**एतानि संधिजातानि मिमानश्छन्दसोऽक्षरैः।**
**द्वैधं कुर्यादसंपूर्णे संपूर्णे किञ्चिन्नेङ्ग्येत्॥ इति॥ १९॥**

**संधिजातानि चत्वारि**। तान्येव दर्शयति **प्रश्लिष्ट**मित्यादि (ना)। **प्रश्लिष्टं** प्रश्लेषयुक्तमक्षरम्। **ऋचि प्रश्लिष्टाः स्वरसंधयः** (पु.सू.६.१५३) इति फुल्लकारैरुदाहृतं गुणवृद्धिसवर्णदीर्घरूपम्। **अभिनिहितं** समयेऽपि आभिमुख्ये न (नि) हितम् (व) स्थितम्। पूर्वरूपापरलक्षणः **क्षिप्रसंधिः**।

---

1. S[1]P तद्रहितोनीकरोति, S[1] तद्रहितो न करोमिति for तदुनीकरोति।
1. S[1-2P] after करोति ins. इति।
6. AS[2] एकाक्षरीभाविनो for एकाक्षरभाविनो।
10. A Om. अथ . . . आगच्छति।
12. A अव्यक्ते for अप्यर्थे।



अभिध्रुवं च यवान्तसंधिः। भूयांस्तु विशेषः। पदकाले विप्रकर्षो यत्र स क्षिप्रसंधिः। यथा - **त्वामग्ने पुष्करादध्यथर्वा निरमन्थत** (सा.९) इति। यथा - **भरद्वाजे सविधानो यविष्ठा** (सा.३७) इति। एवमादावक्षरैश्छन्दसो **मिमानः** माता **असंपूर्णे छन्दो द्वैधं कुर्यात्** इति विकर्षेण गायेत्। **संपूर्णे** सति किमप्यक्षरं न गणयेत्। न चालयेदिति॥ १९॥

**छन्दो०** - एकाक्षरीभावसंधीन् तद्विकर्षं च वक्तुं प्रतिजानीते - **तदप्येतौ श्लोकौ भवत** इति। एकाक्षरीभावसंधीन् आद्यश्लोकेनाह - **चत्वारीति**। **यै**रेकाक्षरीभाविसंधिभिः **छन्दः** गायत्र्यादिच्छन्दः। जातावेकवचनम्। **ह्रसते** ह्रस्वं भवति। तानि **संधिजातानि** अक्षराणि **प्रश्लिष्टम् अभिनिहितं क्षिप्रसंधिरभिध्रुवम्** (इति) **चत्वारि** चतुर्विधानीत्यर्थः। तत्र प्रश्लिष्टम् - **अकः सवर्णे दीर्घः** (पा. ६.१.१०१)। **आद्गुणः** (पा.६.१.८७)। **वृद्धिरेचि** (पा.६.१.८८)। **एङः पदान्तादति** (पा.६.१.१०९)। एतैर्व्याकरण सूत्रैर्विहितम्। **ऋचि प्रश्लिष्टाः स्वरसंधयः** (पु.सू.६.८.१) इति फुल्लसूत्रे तेषां प्रश्लिष्टसंधिविश्लेषदर्शनात्। तथा च शौनकः -

**समानाक्षरे सस्थाने दीर्घमेकमुभे स्वरम्।**
**इकारोदय एकारमकारः सोदयस्तथा॥**
**उकारोदय ओंकारं परेष्वौकारमोजयोः।**
**औकारं युग्मयोरेते प्रश्लिष्टा नामसंधयः॥**

(ऋ.प्रा.२.१५-२०) इति। अभिनिहितं नाम **एङः पदान्तादति** (पा.६.१.१०९) इति विहितम्। तदुक्तं शौनकेन -

**अथाभिनिहितः संधिरेतैः प्राकृतवैकृतैः।**
**एकीभवति पादादिरकारस्तेऽत्र संधिजाः॥**

(ऋ.प्रा.२.३४) इति। शौनकमतानुसारेणाभिनिहितमिति। तस्य पृथक्ग्रहणम्। तस्यापि प्रश्लिष्टसंधौ **मह्वेऽवस इमा-उवायामि**

---

6. A एकाक्षर for एकाक्षरी।
8. S[1-2] Om. यैरेका . . . अभिध्रुवम्।
14. S[1-2] विकर्ष० for विश्लेष०।
23. A Om. तस्य।

(पु.सू.६.८.३)ति फुल्ले दर्शनात्। **क्षिप्रसंधिर्नाम इको यणचि** (पा.६.१.७७) इति विहितः। तदुक्तम् -

**समानाक्षरमन्तस्थां स्वामाकण्ठ्यं स्वरोदयम्।**
**न समानाक्षरे स्वे स्वे ते क्षैप्राः प्राकृतोदयाः॥**

(ऋ.प्रा.२.२१.-२२) इति। अभिधुवसंधिर्नाम नित्यसंधिरित्यर्थः। स्वभावसिद्धमकारवकारान्तसंयोगः॥

विधृत्यादिच्छन्दसामक्षरसंख्याभिरेव विधानात् चत्वारः सप्ताक्षरा इत्युदाहरन्ति। **नदं वा ओदतीनाम्** (सा.१५१२) इति। **चत्वारो नवाक्षर** इत्युदाहरन्ति। **उपेदमुयपर्चनम्** (ऋ.६.२८.८) इत्यादौ सप्ताक्षरपादादीनां परिभाषाभावात् च तत्र तत्राक्षर पूर्त्यर्थमक्षरविकर्षणं द्वितीयश्लोकेनाह- **एतानीति। मिमानः** छन्दोऽक्षरगणयिता। छन्दोजिज्ञासुरित्यर्थः। **छन्दसः** जातावेकवचनम्। छन्दसामक्षरे **असंपूर्णे** सति **एतानि** पूर्वोक्तानि **संधिजातानि** प्रश्लिष्टादीनि चत्वार्यक्षराणि **द्वैधं** विभागं **कुर्यात्। संपूर्णे** सति **किञ्चित्** किमपि **न** कुर्यादित्यर्थः। तत्र किमपि न कुर्यादित्यर्थः। तत्र क्षिप्रविकर्षे विकृष्टयोः अचोर्मध्ये पूर्वस्मादुवर्णात् ऋवर्णाच्च परत्वेन यकारवकाररेफा यथाक्रमं भवन्ति। नित्यविकर्षे विकृष्टयोर्हलोर्मध्ये यकारात् पूर्वमिकारः वकारात् पूर्वमुकारो भवति। एतत् विकर्षेण **तुवं वृत्राणि** (सा.२४८) इत्यत्र द्वादशाक्षरपरिभाषायां ज्ञापितम्। शौनकस्तु प्रकारान्तरेणाह-

**व्यूहेदेकाक्षरीभावान् पादेषूनेषु संपदे।**
**क्षैप्रवर्णांश्च संयोगान् व्यवेयात् सदृशैः स्वरैः॥**

(ऋ.प्रा.१७.२२.२३) इति। प्रश्लिष्टविभागस्योदाहरणम् - **उपेदमुपपर्चनम्** (ऋ.६.२८.८) इत्यत्र उप + इदम्। अभिनिहितस्य **पूर्वस्य यत्ते अद्रिवः** (सा.६४८)। **क्षिप्रस्य प्रोष्वस्मै** (सा.१८०१) इत्यत्र प्रोषुवस्मै। नित्यस्य

12. A संपूर्णे for असंपूर्णे।
21. S[2]A ०वर्णाश्च for ०वर्णांश्च।
24. SA प्रेष्वस्मै for प्रोषुवस्मै।



**पतिं वो अघ्न्यानाम्** (सा.१५१२)। **नभन्तामन्यकेषाम्** (सा.१८०१) ॥१९॥

तत्त्व० - छन्दोविचितिज्ञानस्य फलं दर्शयति -

**छन्दसां विचयं जानन् यः शरीराद्विमुच्यते।**
**छन्दसामेति सालोक्यमानन्त्यायाश्नुते श्रियम्।** इति श्रियम् ॥२०॥

इति द्विरुक्तिः पटलसमाप्त्यर्था॥ २०॥

इति (श्रीतातप्रसादविरचितायां तत्त्वसुबोधिन्यां) निदानसूत्रवृत्तौ द्वितीये पटले तृतीयः खण्डः ॥ ३ ॥

छन्दो० - अथ छन्दोविचितिपरिज्ञानवतः पुरुषस्य श्लोकेनैकेन फलमाह - छन्दसामिति। **यश्छन्दसां** गायत्र्यादीनां **विचयं** स्वरूपमित्यर्थः। **जानन्** विद्वान् स्यात्। **यः शरीराद्विमुच्यते**। स्वयमेव विमुच्यते। कर्मकर्तरि लकारः। **सह षोडशं वर्षशतं जीवति** (छा.उ.३.१६.७) इति उपनिषदुक्त-पुरुषायुषोऽनुभूय पश्चात् स्वेच्छया म्रियते इत्यर्थः। तथा च **अथ यो मन्त्रे मन्त्रे वेद स सर्वमायुरेति श्रेयान् भवति** (आ.ब्रा.१.१.६) इति आर्षेयब्राह्मणम्। तदनन्तरं **छन्दसां सालोक्यं** समानलोकवासित्वम् **एति** प्राप्नोति। अत्र छन्दः पादेन तदभिमानिन्यो देवता उच्यन्ते। तथा च ब्राह्मणम्- **साध्या वै नाम देवा आसंस्ते सर्वेण यज्ञेन सह स्वर्गं लोकमारते देवाश्छन्दांस्यब्रुवन्। सोममाहतेति जगतीं प्राहिण्वन्। सा त्रीण्यक्षराणि हित्वैकादशाक्षरा भूत्वागच्छत्। त्रिष्टुभं प्राहिण्वन्। सैकमक्षरं हित्वा त्र्यक्षरा भूत्वागच्छत्। गायत्रीं प्राहिण्वन्। चतुरक्षराणि वै तर्हि च्छन्दांस्यासन्। सा तानि चाक्षराणि**

1. S[1]P अघ्नियानां for अघ्न्यानां।
1. S[1]P अन्नियकेषां for अन्यकेषां।
5. S[1-2] आनन्त्याम् for आनन्त्याय।
10. A Om. विचयं।
10. A मानस्तु for जानम्।
11. A after स्यात् adds: इत्यर्थः।
11. A transp. यः after शरीराद्विमुच्यते; S[1-2] सः for यः।
11. A छन्दसामेति for स्वयमेव विमुच्यते।
13. A पुरुषदीर्घायुर्भूत्वा for पुरुषायुषोऽनुभूय।

हरन्त्यागच्छत्। अष्टाक्षरा भूत्वा त्रीणि च सवनानि। हस्ताभ्यां द्वे सवने दन्तैर्दंष्ट्वा तृतीयसवनम् (तां.ब्रा. ८.४.१) इति। तथा छन्दोऽभिधानान्नेति वेति ब्रह्ममीमांसासूत्रे (१.१.२५)। कल्पकारेणाप्येवंविधा श्रुतिर्दर्शिता। तथा हि **चतुरक्षराणि छन्दांस्यग्रे समभवन्। तेषु जगती सोमाहरणाय गता त्रीण्यक्षराणि हित्वागच्छदित्यादि**। यद्वा छन्दःपादेन ऋषिशक्रब्रह्माण उपलक्ष्यन्ते। तदृषिशक्रब्रह्मणां **सालोक्यमेति**। तथा चार्षेयब्राह्मणम् - **तस्मादेतानि मन्त्रे मन्त्रे विद्यात्। ऋषीणां सस्थानो भवति सस्थानो भवति ब्रह्मणः। स्वर्गे लोके महीयते स्मरन्** (आ.ब्रा.१.१.६) इति। न केवलं छन्दोलोकादिप्राप्तिः। किंतु ब्रह्म च प्राप्नोतीत्याह - **आनन्त्यायाश्रुते श्रियम्** इति। स्पष्टोऽर्थः। द्विरुक्तिः पटलसमाप्तिसूचनार्था॥ २०॥

इति तञ्जावूरू ग्रामनिवासिना श्रीपेत्ताशास्त्र्यपराभिधानेन हृषीकेशशर्मणा विरचितायां छन्दोविचितिवृत्तौ द्वितीये पटले तृतीयः खण्डः॥ ३॥

द्वितीय पटलः समाप्तः॥ २॥

छन्दोविचितिभाष्यं संपूर्णम्।

-- ओम् --

---

6. A उच्यन्ते for उपलक्ष्यन्ते।
7. $S^{1-2}$ Om. तद्।
10. A after तु adds : आनन्त्यात्।
11. $S^{1-2}$ after सूचनार्था add : इति छन्दोवित्तितिभाष्यप्रदीपिका समाप्ता।
14. A after पटलः ins. अपि।
14. A after समाप्तः adds -

वैदिकाचारनिरत विद्वद्दीक्षितमण्डिते।
तञ्जावूरभिधग्रामे रम्यं वासं प्रकुर्वता॥
सत्कौशिककुलश्रीमत्प्रयागकुटिलेन च।
अधीतिना सामवेदे साङ्गे तद्भाष्यवेदने॥
प्रतिपादयता फुल्लसाम्नां पर्वणि पर्वणि।
श्रौतस्मार्तप्रवीणेन नारायणसुतेन हि॥
पेत्ताशास्त्र्यभिधानेन हृषीकेशेन शर्मणा।
वृत्तिर्निदानगच्छन्दोविचित्याः क्रियतेतराम्॥
इति छन्दोविचितिभाष्या (!) समाप्ता॥
हरिः ओं शुभमस्तु। करकृतमपराधं क्षन्तु-

# APPENDIX

Quotations from other works found in the text and commentaries are listed below with reference to their source in alphabetical order. Where the sources can not be traced, the same are placed in bracket.

| उद्धरणानि | मूलस्रोतः | पृ.सं. |
|---|---|---|
| अः कारो वृद्धः पदगीतः। पादान्ते | पु.सू. ६. १. १ | ११६ |
| अः कारो वृद्धः पदगीतः। | पु.सू. ६.१.१ | ११७ |
| अकः सवर्णे दीर्घः। | पा. ६.१.१०१ | १७३ |
| अक्षत्ररपङ्क्तिषु ज्यैष्ठचकामायोक्थानि। | तां.ब्रा.८.१०.९ | ९५ |
| अक्षरपङ्क्तिषु ज्यैष्ठचकामायोक्थानि। | तां.ब्रा. ८.१०.९ | ९६ |
| अगन्मज्योतिर्। | आ.गा.४.१.१७० | ६१ |
| अग्न आनो मित्रायाहि . . . . ज्यानि। | सा. ६६०-७१ | १५१ |
| अग्न आयाहि। | सा. १ | १३ |
| अग्न आयाहि वीतये। | सा. १ | ४८ |
| अग्न आ याहि वीतये। | सा. १ | ५३ |
| अग्न आयाहि वीतये। | सा. १ | १५८ |
| अग्न आ याहि वीतये। | सा. १ | १६८ |
| अग्न आयूंषि। | सा. १४४८ | ३९ |
| अग्न आयूंषि। | सा. ६२७ | ४० |
| अग्न आयूंषि। | सा. ६२७ | ४० |
| अग्न आयूँषि। | सा. ६२७ | १६६ |
| अग्निं क्रव्यादमकृण्वन् गुहानाः। | मं.ब्रा. १.१.४ | ९८ |
| अग्निं तं मन्ये यो वसुः। | सा. १७३१-३३ | १०५ |
| अग्निं तं मन्ये यो वसुः। | सा. १७३७-४९ | १३१ |
| अग्निं तं मन्ये यो वसुः। | सा. १७३७-४९ | १३१ |
| अग्निं न स्ववृक्तिभिः। | सा. ४२० | ८२ |

| | | |
|---|---|---|
| अग्निं वो वृधन्तम्। | सा. २१ | १३५ |
| अग्निं सुम्नाय दधिरे पुरोजनाः। | सा. १८१५ | ८३ |
| अग्निं होतारम्। | सा. ४६५ | १२८ |
| अग्नि. | तां.ब्रा. ७.१.८. | ४० |
| अग्निनेन्द्रेण। | ऋ. ८.३४.१. | ९७ |
| अग्निनेन्द्रेण वरुणेन विष्णुना। | ऋ.८.३५.१. | ३१ |
| अग्ने आयाहि। | सा. १ | १६ |
| अग्ने तमद्य। | सा. १७७१ | ९५ |
| अग्ने तमद्याश्वम्। | सा. ४३४ | ९५ |
| अग्ने तमद्याश्वं न स्तोमैः। | सा. १७७१-३ | ९५ |
| अग्ने तमद्येति। | क्षु.क. १.६.१४ | ९६ |
| अग्ने तव श्रवः। | ऋ. १०.१४०.१ | ८४ |
| अग्ने तव श्रवः। | द्रा.श्रौ. २९.४.७ | १३० |
| अग्ने तव श्रवः। | सा. १८१६ | १३० |
| अग्ने तव श्रवः। | सा. १८.१६-२१ | १३१ |
| अग्ने तव श्रवः। | सा. १८१६ | १३७ |
| अग्ने तव श्रवो वयः। | सा. १८१६ | ८४ |
| अग्ने तव श्रवो वयः। | सा. १८१० | ८४ |
| अग्ने त्वं नो अन्तमः। | सा. ४४८ | ३१ |
| अग्ने त्वं नो अन्तमः। | ११०७-९ | १०७ |
| अग्ने पवस्व स्वपोम्। | सा. १५१४ | ३९ |
| अग्ने रथं न वेद्यम्। | ( ) | २२ |
| अग्ने रथन्नवेद्यम्। | सा. ४ | २२ |
| अग्ने रथन्नवेद्यम्। | सा. ४ | ४८ |
| अग्नेरिलान्दं पञ्चानुगानम्। | आ.ब्रा. २.१९.१ | १३० |
| अग्ने वाजस्य गौतमः। | सा. ६६ | ५७ |
| अग्ने वाजस्य गोमतः। | सा. ९९ | ५८ |



| | | |
|---|---|---|
| अग्ने वाजस्य गोमतः। | सा. १५.६५-६७ | १०५ |
| अग्रं वै छन्दसां गायत्री। | ऐ.आ.१.४.१. | ५४ |
| अचोदसो नो धन्विन्निन्दवः। | सा. ५५५ | १३८ |
| अतिजगृत्युपरिष्टात् बृहत्यौ। | ऋ.अ.२.४६.९८ | १०० |
| अतिरात्रः षोडशिमानविक्लृप्त। | आ.क. ९.४९.१. | १०६ |
| अत्यष्टिः। अग्निं होतारं . . . . दास्वन्तम्। | सा. ४६५ | १२७ |
| अत्यष्टिरग्निऽहोतारम्। | सर्वानुक्र-१.१२७ | १२८ |
| अत्रानुनासिकः पूर्वस्य तु वा। | पा.८.३.२ | १९ |
| अथ देवासुरच्छन्दांसि। | नि.२.२.३ | ४ |
| अथ पुर उष्णिगनुष्टुप्। | तां.ब्रा. ८.८.२६ | ६६ |
| अथ यत्रोत्तमोऽष्टाक्षरस्तां ज्योतिष्मती। | नि.सू. १.४.२ | ११० |
| अथ यो मन्त्रे वेद स . . . . भवति। | आ.ब्रा.१.१.६ | १७५ |
| अथ यत्रोत्तमोऽष्टाक्षरस्तां ज्योतिष्मतीत्याचक्षते। | नि.सू.१.४.२. | २५ |
| अथर्वाणो अशिश्रयुः। | सा. ६४६ | १३ |
| अथर्वाणो अशिश्रयुः। | सा. ६४६ | १४ |
| अथातः संहिताया। | ऐ.आ.३.१.१ | ३ |
| अथातः सामान्तानाम्। | नि.सू. १.१२.१ | ३ |
| अथात उक्थ्यन्तस्यैव भवतः। | १.५ | ६८ |
| अथातश्छन्दसां विचयं व्याख्यास्यामः। | नि.सू.१.१.१ | १५८ |
| अथातो निर्वचनम्। गायत्री गायतेः स्तुतिकर्मणः | दे.अ.ब्रा.३.१.२ | ५४ |
| अथातोऽनन्ता। | क्षु.सू.३.१६ | ३ |
| अथातो विद्धचव्यपदेशे। | द्रा.श्रौ.१.१.१ | ३ |
| अथापि चतुष्पदेषु। अग्ने तमद्य। | सा. ४३४ | १६९ |
| अथापि त्रिषु। अपि वृश्च पुराणवत्। | ऋ.८४०.६ | १७० |
| अथापि द्वावुक्त्वा . . . . भर्यन्नृतः इति। | | १६९ |
| अथापि द्वौ द्वावथ त्रीन्। प्रोष्वस्मै पुरोरथम्। | सा. १८०१ | १७० |
| अथाभिनिहितः संधिरेतैः . . . . सन्धिजाः। | ऋ.प्रा.२.३४ | १७३ |

| | | |
|---|---|---|
| अभि प्रियाणि पवते च नो हितः। | सा. ५५४ | ९९ |
| अभि वो वीरम्। | सा. २६२ | ३३ |
| अभि वो वीरमन्धसो। | सा. २६५ | ३३ |
| अभि वो वीरमन्धसो मदेषु गाय। | सा. २६५ | ४६ |
| अभि वो वीरमन्धसो मदेषु गाय। | ऋ.८.४६.१४; | ७२ |
| | सा. २६५ | |
| अभि वो वीरमश्रसो मदेषु गाय। | सा. २६५ | ३२ |
| अभिसो। | सा. ८५० | ७८ |
| अभिसोमास आयवः। | सा. ५१८ | ८६ |
| अभिसोमास आयवः। | सा. ५१८ | ८६ |
| अभीषुणः सखीनाम्। | सा. ६४८ | ५३ |
| अभीषुण। | सा. ६७८ | ७३ |
| अयऽ्णायतेसुत उवाऽ२३होइ। | ऊ.द. २३ | ७३ |
| अयं त आ तू . . . . . . इदं वसो। | सा.७२५-३६ | १५२ |
| अयं त्वमग्ने यज्ञानाम्। | सा. २ | २१ |
| अयं पूषा रयिर्भग। | सा. ८१८ | १०५ |
| अया रुचा हरिण्या। | सा.४६३ | १२८ |
| अयुजौ जागतौ सतो बृहती। | ऋ.अ.१.८.४ | ८१ |
| अरण्योर्निहितः। | सा. ७८ | २८ |
| अरण्योर्निहितो जातवेदाः। | सा.७९ | २७ |
| अरण्योर्निहितो जातवेदाः। | सा. ७९ | ४६ |
| अरण्योर्निहितो जातवेदाः। | सा. ७१ | ९७ |
| अर्चामि सत्य सवम्। | नि.सू. १.१.१३ | २१ |
| अर्चामि सत्यसवऽ्रत्न . . .। | आ.श्रौ.४.६.३ | ४४ |
| अर्चामि सत्यसवसऽ् रत्न . . .। | तै.सं. १.६.१.१ | ४४ |
| अर्द्धचैष्वनुगानानि। | नि.सू.६.७ | १२८ |
| अवसितं पूर्वस्य। | तै.प्रा.२१.३. | १३ |



| | | |
|---|---|---|
| अवृद्धादिपदान्तात्। | पु.सू. ७.९.१. | ३४ |
| अव्यञ्जनान्तम्। | तै.प्रा. २२.१५ | ४७ |
| अश्वं नत्वा वारवन्तम्। | सा. १७ | ४९ |
| अश्विना वर्तिरस्मत्। | सा. १७२८-३० | १०५ |
| अष्टकौ सप्तकः षट्को दशको नवकश्च। | ऋ.अ.१.१०.३ | १०३ |
| अष्टकौ सप्तकः षट्को दशको नवकश्च। | ऋ.अ.१.१०.३ | १०३ |
| अष्टमाद्ये बृहत्यौ। | २.५३.१०७ | ३१ |
| अष्टाक्षर आपञ्चाक्षरतायाः। | नि.सू. १.१.५ | २१ |
| अष्टाक्षर आपञ्चाक्षरतायाः प्रतिक्रामति। | नि.सू. १.१.५ | ५४ |
| अष्टाक्षरद्वादशादक्षरौ लघुवृत्ती। | ११ | ४८ |
| अष्टाक्षरपदोत्तमानाम्। | ला.श्रौ. ६.१०.२७ | ६ |
| अष्टाक्षरप्रभृतीनि। | ऋ.प्रा.१६.१ | १५६ |
| अष्टाक्षरास्त्रयः पादाः। | ऋ.१०.१२६.१ | २४ |
| अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति। | तां.ब्रा.१५.१०.८ | ३६ |
| अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति। | तां.ब्रा. १५.१०.८ | ३८ |
| अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति। | तां.ब्रा.१५.१०.८. | ३८ |
| अष्टाक्षरेणेति धानञ्जय्यः। | द्रा.श्रौ.२१.१.३१ | ३८ |
| अष्टाचत्वारिंशदक्षरा जगती। | नि.सू. १.४.४ | ३२ |
| अष्टाचत्वारिंशदक्षरा जगती। | वि.सू. १.४.४ | ३३ |
| अष्टिः। अभि . . . कविक्रतुम्। | सा. ४६४ | १२७ |
| अष्टिनस्त्रयः स्वौ च द्वौ। | ऋ.अ. १.१०.२ | १०२ |
| अष्टिनस्त्रयः स्वौ च महासतो बृहती। | ऋ.अ. १.१०.२ | १०२ |
| असंश्लिष्टा गायति . . . पशवः। | तां.ब्रा.१३.४.६ | १२८ |
| असावि देवं गोऋजीकमश्वः। | सा. २१३. | ४९ |
| अस्तु श्रौषट् . . . दधे। | सा. ४६१ | १२८ |
| अस्तु श्रौषट् पुरो अग्निं धिया दधे। | सा.४६१ | १७० |

